# नामानुक्रमणिका


| | पृष्ठांकः |
|---|---|
| अजः | ६६ |
| अंधकासुरसूदनः | २८ |
| अनघः | ५१ |
| अनीश्वरः | ४० |
| अनेकात्मा | ६३ |
| अनंतः | ७६ |
| अपवर्गप्रदः | ७५ |
| अंबिकानाथः | २३ |
| अव्यक्तः | ७३ |
| अव्यग्रः | ७० |
| अव्ययः | ६९ |
| अष्टमूर्तिः | ६२ |
| अहिर्बुध्न्यः | ६१ |
| उग्रः | २६ |
| कठोरः | ३५ |
| कपर्दी | १७ |
| कपर्दी | २७ |
| कवची | ३४ |
| कामारिः | २७ |
| कालकालः | ३० |
| कृत्तिवासाः | ५४ |
| कृपानिधिः | ३० |
| कैलासवासी | २२ |
| खट्वांगी | २१ |
| खंडपरशुः | ६५ |
| गंगाधरः | २९ |
| गणनाथः | ४८ |
| गिरिधन्वा | ५३ |
| गिरिप्रियः | ५२ |
| गिरिशः | ५१ |

| | पृष्ठांकः |
|---|---|
| गिरीशः | ५० |
| चारुविक्रमः | ५९ |
| जगद्गुरुः | ५७ |
| जटाधरः | ५६ |
| जगद्व्यापी | ३३ |
| तारकः | ७६ |
| त्रयीमूर्तिः | ४० |
| त्रिपुरांतकः | ३५ |
| त्रिलोकेशः | २५ |
| दक्षाध्वरहरः | ७१ |
| दिगंबरः | ६२ |
| दुर्धर्षः | ५० |
| देवः | ६८ |
| नीललोहितः | १८ |
| पंचवक्त्रः | ४४ |
| परमात्मा | ४१ |
| परमेश्वरः | ७७ |
| परशुहस्तः | ३२ |
| पशुपतिः | ६७ |
| पाशविमोचनः | ६६ |
| पिनाकी | १४ |
| पुराराति: | ५५ |
| पूषदंतभिद् | ७० |
| प्रजापतिः | ४९ |
| प्रमथाधिपः | ५६ |
| भक्तवत्सल | २३ |
| भगनेत्रभिद् | ७२ |
| भगवान् | ५५ |
| भर्गः | ५२ |
| भवः | २४ |

| | पृष्ठांकः | | पृष्ठांकः |
|---|---|---|---|
| भस्मोद्धूलितविग्रहः | ३८ | शशिशेखरः | १५ |
| भीमः | ३१ | शाश्वतः | ६५ |
| भुजंगभूषणः | ५२ | शितिकंठः | २५ |
| भूतपतिः | ६० | शिपिविष्टः | २३ |
| महादेवः | ६९ | शिवः | १० |
| महासेनजनकः | ५८ | शिवाप्रियः | २५ |
| महेश्वरः | ११ | शुद्धविग्रहः | ६४ |
| मृगपाणिः | ३२ | शूलपाणिः | १९ |
| मृडः | ६७ | श्रीकंठः | २३ |
| मृत्युंजयः | ५६ | सदाशिवः | ४६ |
| यज्ञमयः | ४३ | सर्वज्ञः | ४१ |
| रुद्रः | ५९ | सहस्रपाद | ७४ |
| ललाटाक्षः | २९ | सहस्राक्षः | ७४ |
| वामदेवः | १६ | सात्विकः | ६४ |
| विरूपाक्षः | १६ | सामप्रियः | ३८ |
| विश्वंभरः | ४७ | सूक्ष्मतनुः | ५७ |
| विष्णुवल्लभः | २२ | सोमः | ४३ |
| वृषभारूढः | ४७ | सोमसूर्याग्निलोचनः | ४१ |
| वृषांकः | ३६ | स्थाणुः | ६१ |
| वीरभद्रः | ४७ | स्वरमयः | ३९ |
| व्योमकेशः | ५८ | हरः | ७१ |
| शंकरः | १९ | हरिः | ६९ |
| शंभुः | १३ | हविः | ४२ |
| शर्वः | २४ | हिरण्यरेताः | ४९ |


## प्रामाण्येनोपन्यस्तानां ग्रंथानां ग्रंथकृतां च निर्देशः


| | क्रमांकः | | क्रमांकः |
|---|---|---|---|
| अग्निपुराणम् | १ | काशीखण्डम् | ८ |
| अनेकार्थध्वनिमंजरी | २ | केदारम् | ९ |
| अभिनववृत्तरत्नाकरः | ३ | कौर्मम् | १० |
| अमरः | ४ | गीता | ११ |
| आनुशासनिकं पर्व | ५ | जाबालश्रुतिः | १२ |
| आपस्तंबकल्पः | ६ | जैमिनिसूत्रम् | १३ |
| कामिके ( सदाशिवप्रतिष्ठामंडलम् ) | ७ | तंत्रराजः | १४ |

| | क्रमांकः |
|---|---|
| दीक्षिताः ( अप्पय ) ... ... ... | १५ |
| नानार्थरत्नमाला ... ... ... | १६ |
| पाणिनीयव्याकरणम् ... ... ... | १७ |
| पैंगलसूत्रम् ... ... ... ... | १८ |
| ब्रह्म तर्कस्तवः ... ... ... ... | १९ |
| ब्रह्मांडपुराणम् ... ... ... ... | २० |
| ब्रह्मोत्तरखंडः ... ... ... ... | २१ |
| मुंडकम् ... ... ... ... | २२ |
| रसरत्नाकरः ... ... ... ... | २३ |
| रामायणम् ... ... ... ... | २४ |
| लैंगम् ... ... ... ... | २५ |
| वराहपुराणम् ... ... ... ... | २६ |
| वातुलशुद्धागमः ... ... ... | २७ |
| वामनपुराणम् ... ... ... ... | २८ |
| वायवीयसंहिता ... ... ... | २९ |
| वायुपुराणम् ... ... ... ... | ३० |
| वासिष्ठम् ... ... ... ... | ३१ |
| विष्णुपुराणम् ... ... ... ... | ३२ |

| | क्रमाकः |
|---|---|
| विष्णुभागवतम् ... ... ... | ३३ |
| वृत्तरत्नाकरः ... ... ... ... | ३४ |
| शंकरसंहिता ... ... ... ... | ३५ |
| शारीरकम् ... ... ... ... | ३६ |
| शिवधर्मः ... ... ... ... | ३७ |
| शिवधर्मोत्तरम् ... ... ... ... | ३८ |
| शिवपुराणम् ... ... ... ... | ३९ |
| शिवस्तवः ... ... ... ... | ४० |
| शैवागमः ... ... ... ... | ४१ |
| षड्विंशब्राह्मणम् ... ... ... ... | ४२ |
| संग्रहः ... ... ... ... | ४३ |
| सुमतिचंद्रः ... ... ... ... | ४४ |
| सौप्तिकपर्व ... ... ... ... | ४५ |
| सौभिकम् ... ... ... ... | ४६ |
| सौरसंहिता ... ... ... ... | ४७ |
| हरिवंशः ... ... ... ... | ४८ |
| हैमव्याकरणम् ... ... ... ... | ४९ |

श्रीः ।

# शिवनामकल्पलता ।

## ससुधापूररत्नालवालसहिता ।

वेदान्तगीतविभवं पुरुषं पुराणमात्मानमाद्यमनघं करुणावतीर्णम् ।
यस्यावलम्बनवशाद्विलयं प्रयाति विघ्नान्धकारनिचयस्तमहं भजामि ॥ १ ॥

आनन्दघनजानन्दलहरीजालनिर्भरः ।
मोक्षैकपदवीनाथः श्रीनाथोऽस्तु गतिर्मम ॥ २ ॥

अद्वैताब्धिगलत्सुधारसयुतैर्द्वैतप्रमावोद्भवैः
पद्यैः सूक्तिभिरुक्तवाक्यरचनैर्न्यायामृताप्लावितैः ॥
विद्यावोधनत प्रसिद्धविभवान्विद्वत्समाजोल्लस-
द्गोपालेन्द्रयतीन्द्रपूज्यचरणाञ्श्रीबालपूर्वान्भजे ॥ ३ ॥

मुक्तापीतपयोदमौक्तिकजपावर्णैर्मुखैः पञ्चभि-
स्त्र्यक्षैरञ्चितमिन्दुकुन्दधवलच्छायं निजाङ्गावृतम् ॥
घण्टाशूलकृपाणपाशहुतभुक्टङ्काहिवज्राङ्कुशा-
भीतिद्योतकराब्जमण्डिततनुं वन्दे मुदे शंकरम् ॥ ४ ॥

स्कान्दादौ शिवनामकल्पलतिकां रूढां पुमर्थैः फलै-
रानम्रामुपलभ्य भास्करमखी रत्नालवालं व्यधात् ॥
वृत्तानां शतकं ससप्तदशकं यश्चोर्मितं तत्सुधा-
सारैः पूरयति स्म व्यंकटपतिः काशीपतिप्रीतये ॥ ५ ॥

क्वाहं मूढः क्व शिवमहिमा भारतीभावदूरः
क्वाहं शंभोः परमधुरिमोद्दामनामस्तवेऽर्हः ॥
स्वामिन्भूयो विषमविषया वैपरीत्य मदीये-
ष्वारम्भेऽस्मिन्प्रचलगतिरस्त्वद्रिकन्येव धन्या ॥ ६ ॥

इहखल्वखिलनिगमागमायातिविस्तृतविविधविद्याप्रबन्धजालैरत्यन्तमनादिभवानेकपद्धाराशौधि-
तमशान्तिमलभमानान्प्रबलकालिमलकलुषीकृतस्वान्ताञ्जन्मवृद्धिजरामृत्युतापसंतप्तचित्तविभ्रान्तान्व-
हुतरविविधविषमविषयाकरभवजलधिपतनभयाकुलायमानबाह्यान्तरभावाञ्शान्त्यादिगुणयोग्यान्पुरु-
षधौरेयान्परितः पर्यालोच्य परमकृपालुरखिलनिगमागमस्मृतिसूक्तसूत्रेतिहासविधानपायमन्त्रतन्त्राप-
सिद्धसंदर्शनसंदर्भतन्त्रज्ञः श्रीमद्भास्कररायभारतीश्रीचिनार्यवर्यात्मजवेगरोल्लासेन भारतीविलासाम्बश्री-

मद्धास्कररायदीक्षिताग्निचित्परमेश्वरभक्ताग्रगण्यः परमपावनीमशेषजनमनःसमाल्हादकारिणीं समस्तकलिमलकुलुपापहारिणीं संसारसागरोत्तारिणीमभिनवमनोहारिशिखरिणीमुखपरिगणितहरिणप्लुतान्ताष्टशतवृत्तान्तां परमशिवाष्टोत्तरशतामृतनामशक्तिप्रतिपादिकां शिवनामनिर्वचनाख्यां रत्नालवालाख्यां स्तुतिं प्रणिनीषुस्तत्परिसमाप्तिप्रतिबन्धकप्रत्यूहापोहाय परमपुरुषार्थसंप्राप्तये चाचरितं परमशिवप्रतिपादकं मङ्गलं जनानुजिघृक्षया ग्रन्थतो निबध्नाति शार्दूलविक्रीडितेन।

ॐ मोक्षस्यैकनिदानमब्जनयनब्रह्मेन्द्रचद्रादिभि-
र्देवैः प्राणपदीकृतं कलिमलप्रध्वंसि धर्माङ्कुरः॥
भारत्यापि सुदुर्निरूपमहिम त्र्यन्तरे गोपितं-
वक्तुर्मङ्गलदं शिवेति विमलं नामैव नस्तारकम्॥ १॥

**मोक्षस्येति**। धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थेष्वपि नित्यनिरतिशयानन्दावाप्तिरूपमोक्ष एव परमपुरुषार्थः। 'न स पुनरावर्तते न स पुनरावर्तते' इति श्रुत्या तस्यैव परमत्वावगमादित्यत स्तत्प्राप्तिसाधनमेवादौ दर्शयति। **मोक्षस्यैकनिदानमिति** मोक्षस्य सालोक्यसामीप्यसारूप्यसायुज्यकैवल्याख्यस्य पञ्चविधस्याप्यपवर्गस्य एकं निदानमादिकारणमित्यर्थः। अनितरसाधारणसाधनमाप्यत्वमाविष्कर्तुमेकेति मुख्येत्यर्थः। मोक्षमुख्योपायत्वे मानमाह। **अब्जनयने**त्यादिना। तथाचानादिपुरुषोत्तमाब्जयोनिप्रभृत्यखिलसुरगणैः साधारणफलकामैरनन्यध्यानैकनिष्ठेन मनसा स्थिरीकृतमित्यर्थः। नन्वनादिवासनामलदूषितान्तःकरणानामाधुनिकजनवृन्दानां कथमत्र प्रवृत्तिः स्यादत आह **कली**त्यादि। कलिमलस्य कलिप्रयुक्तपापराशेः प्रध्वंसि मूलोच्छेदकारीत्यर्थः। ननु स्वयमेव तद्ध्वंस उत कारणान्तरसद्भावात्। नाद्यः। भजनवृत्तिवैयर्थ्यादतःपरममाह **धर्माङ्कुर** इति तथा च 'सामानाधिकरण्यं हि तेजस्तिमिरयोः कुत' इति न्यायाद्धर्माङ्कुरः स्वयमुत्पद्यमानस्तद्विरोधिलयपूर्वक एवोत्पद्यत इति भावः। ननु निरवधिकनिरन्तरानन्दक्षायिमंगलाकरपरमशिवनिजगुणगणभजनादिरूपसाधनान्तरस्यापि संभवात्कथमेव नस्तारकमित्येवकारासंभवादित्याशंक्याह **भारत्यापी**ति सुतरां दुःखेनापि निरूपयितुमशक्यो महिमा प्रभावो यस्येति तत्तथा तथाच भारतीवाग्विजृम्भणस्याप्यगोचरमहिमत्वे किमस्मदुक्तिस्तत्र फलतीति कैमुतिकन्यायात्र साधनान्तरसंभव इत्यपिना सूचितम्। वेदैकप्रमाणसंवेद्यत्वं दर्शयति **त्र्यन्तर** इति त्रयी वेदस्तस्य यदन्तरं मध्यभागस्तस्मिन्नित्यर्थः। तथाहि ऋग्यजुःसामात्मकस्य वेदत्रयस्य योऽयं मध्यभागः सप्तकाण्डसमुदायात्मको यजुर्वेदस्तस्य यो मध्यभागश्चतुर्थकाण्डस्तस्य यो मध्यभागः श्रीरुद्राध्यायस्तस्य यो मध्यभागो 'नमः सोमाय च' इत्यनुवाकस्तस्य यो मध्यभागो 'नमः शिवाय च' इति षडक्षरात्मकः शैवमहामन्त्रस्तन्मध्यवर्तीत्यर्थः। तथाचोक्तं शंकरसंहितायां 'सर्वासामपि विद्यानामुत्कृष्टा श्रुतिरुच्यते॥ चतुर्णामपि वेदानां यजुर्वेदो विशिष्यते॥ यजुर्वेदश्चतुष्काण्डः श्रीरुद्रस्तत्र तत्र च॥ नमः सोमाय चेत्यत्र वरा पञ्चाक्षरी मता॥ तन्मध्ये

शिवरत्नं स्याच्छिव इत्यक्षरद्वयम् ’ इति । यद्यपि त्रय्यन्तरे गोपितमित्यस्मिन्नर्थे नैतच्छंकरसंहितोपबृंहणमुपपादकं चतुर्वेदान्तर्गतत्वेन पंचाक्षरवर्तितया **शिव** इत्यस्य प्रतिपादितत्वात् । तथापि ‘सहस्रे शतम् ’ इतिन्यायेन त्रयीगोपितत्वमप्यस्यैवेत्यदोषः । **वक्तुर्मङ्गलमिति** घुणाक्षरन्यायादवशोच्चारयितुरप्यत्यन्तशुभावहमित्यर्थः । अत एव स्मर्तुर्ज्ञातुर्ध्यातुरित्यादिकमुपेक्षताम् । तथाचोक्तं विष्णुभागवते ‘ यद् द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत् ॥ पवित्रकीर्तिं तमलंघ्यशासनं भवानहो द्वेष्टि शिवं शिवेतर ’ इति । **विमलमिति** । आणवकार्मणमायीयाख्यमलत्रयासंस्पर्शित्वेन निर्मलमित्यर्थः । **तारकमिति** । परमगहनसंसारपारावारपरपारप्रापकं शिवेति नामैव नान्यदेवताप्रतिपादकं नामान्तरमित्यर्थः ॥ १ ॥ नन्वन्यदेवताप्रतिपादकनामान्तरस्याप्यनुस्मरणे किं बाधकं **सेव्यः श्रीपतिरेक एव जगतामि**त्याद्यभियुक्ताद्युक्तेः । असति बाधके वस्तुमात्रस्यैवार्थप्रतिपत्तिकरत्वाच्चेत्याशंक्य साधकबाधकप्रमाणाभ्यामर्थतोऽपि शम्भुरेव सेव्यो नान्य इत्याह स्रग्धरया ।

> आनन्त्यौदार्यसत्यादतिमृतिहृतिभिः स्वल्पसेवातितोपा-
> त्संकष्टोच्छिरयुत्युपेक्षाभयहितवचनैरुत्तमत्वाच्च शम्भुः ॥
> सेव्यो विष्णूपमन्युद्रुहिणमुनिसुतश्रीदमन्येन्द्रदेवै-
> र्दक्षश्रीरामवेदैरशिशुपशुवधूराक्षसैः साक्षिभिर्नः ॥ २ ॥

**आनन्त्येति** शम्भुरेव इत्येतत्साधकहेतुनुपदर्शयति । आनन्त्येत्याद्युत्तमत्वादित्यन्तेन । नान्यस्मिन्नेतादृशा गुणाः संभवंतीति भावः । उपदर्शितनवसंख्याकहेतुसाधकप्रमाणान्यपि नव दर्शयति । विष्णि यत्यादिना वेदैरित्यन्तेन तथाच । विष्ण्वादिसाक्षिका ये आनं त्यादयो गुणास्तेभ्यः शंम्भुरेव सेव्य इति यथाक्रममन्वयः । तथाहि आनंत्ये विष्णुः साक्षी । पुरा हि परस्परजयाभिप्सवो र्ब्रह्मविष्ण्वोश्चिरकालमूर्ध्वाधःपर्यटतोरपर्यवसितायन्तभावयोर्नितान्तमन्त आन्तयोर्मध्ये विष्णोः परावर्तनस्य शिवपुराणे विस्तरेण कथनात् । ब्रह्मणस्तथात्वेऽपि अनृतवचनप्रयुक्तशाप प्राप्त्या सत्यादृतो साक्षित्वमवगन्तव्यम् । औदार्ये उपमन्युर्यथा महर्षेर्व्याघ्रपादस्य तनय उपमन्युरिति बालभावापन्नः प्राकृतबुद्ध्या पयःपानार्थमाराधितः शम्भुः परमोदारक्षीरार्णवमाम्नायच्छादित्यादौ तथाचोक्तं लैंगे ‘ उपमन्युरिति ख्यातो मन्युश्च द्विजसत्तमः ॥ कुमार इव तेजस्वी क्रीडमानो यदृच्छया ॥ कदाचित् क्षीरमल्पं स पीतवान्मातुलाश्रमे॥ ईर्ष्यया मातुलसुतोऽपिबत्क्षीरमनुत्तमम् ॥ पीत्वा जलं यथाकामं दृष्ट्वा जगाद मातरम् ॥ मातर्मातर्महाभागे मम देहि पयस्विनीम् ’ इत्यादिना क्षीरे याचिते ‘ दुःखिता विलटापालं स्मृत्वा नैर्धन्यमात्मनः॥ स्मृत्वा पुनःपुनः क्षीरमुपमन्युरिति द्विजः ॥ देहि देहीति तामाह रोदमानो महामुनिः ’ इत्यादि । माता पुत्रः दुःखमसहमाना ‘ आश्रियमाप दुःखार्ता प्रददौ कृत्रिमं पयः ॥ पीत्वा वै कृत्रिमं क्षीरं मात्रा दत्त द्विजोत्तम ॥ नेदं क्षीरमिति प्राह मातरं

पञ्चविंशतिः । अङ्गानि यथा ‘ सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ’ इत्युक्तानि । अथवाङ्गानि साङ्गप्रत्यङ्गोपाङ्गानि च वातुलशुद्धप्रतिपादितानि। तत्राङ्गानि यथा ‘शिरो वक्त्रं च हृदयमंगमित्याभिधीयते ॥ शक्तिप्रतापौ त्रिगुणा अभेयोऽनुमहस्तथा ॥ ऋद्धिर्या या वैभवं च नादसंहतिरेव च ॥ एते दश गुणाः प्रोक्ता महेशविभवावहा ’ इति । प्रत्यंगानि यथा ‘ वक्षः कण्ठस्तनौ बाहू नाभिगुह्योदरं तथा ॥ नेत्रे नासास्यकर्णं च पाणिपादतलांगुलि ॥ ऊरू जानू च जङ्घे च प्रत्यंगमिति कीर्तितम् ’ इति । उपांगानि यथा ‘ यज्ञोपवीतमालाश्च गन्धमाभरणं तथा ॥ आसनावरणं चैतदुपांगमिति कीर्तितम् ’ इति ॥ कृत्यानि यथा ‘ सृष्टिस्थितिसंहारतिरोधानानुग्रहाख्यानि’ पंच कृत्यानि । तिरोधानानुग्रहौ बन्धमोक्षौ । आगमाः शैवागमाः । **भजनानि** परमशिवनमनादीनि । कलाः ‘ निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ॥ शान्त्यतीते च पंचैताः कलाः स्युः परमेशितुः ’॥ अशांश्च शरभभैरववीरभद्राद्यवतारविशेषाः । ‘ ममैवांशो जीवलोके’ इत्याद्युक्तेः । जीव एव वा । आदिपदात्परमशिवस्य निर्विशेषत्वमिति ।

एवं वर्णद्वयात्मकस्य शिव इति विशिष्टनाम्नो वैभवातिशयमुक्त्वा प्रत्येकं पुनस्तावेव वर्णौ संस्तौति शिखरिण्या

शिवेति द्वौ वर्णौ परपदपतद्धंसगरुतौ तटौ संसाराब्धेः स्वविषयकबोधांकुरदले ॥
श्रुतेरन्तर्गोपायिततररहस्यप्रुवचरौ घरट्टग्रावाणौ भवविटपिबीजौघदलने ॥ ४ ॥

**शिवेति** । परपदं परं धाम परमोत्कृष्टा गतिरिति यावत् । तत्र पतंत आपतंतो व्याप्रीयमाणा ये हंसास्तेषां गरुतौ पक्षाविव स्थितौ तथा च चिदंशभूतानां जीवानां पुनस्तदैक्यावाप्तिहेतुत्वेन परमशिवप्रतिपादकत्वमुक्तं भवति । तच्च भवजलनिधिनिमग्नानां कथं भवेदित्याशंकामपाकर्तुमाह **तटाविति** ।संसाररूपो योऽयमब्धिरर्णवस्तस्य तटौ मर्यादाभूतौ संसारार्णवतारकावित्यर्थः । तटं त्रिष्वित्यमरः । नन्वत्र कथं संसारार्णवतारकत्वं शिवनाम्नः संभवति ‘तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथ अमृतस्यैष सेतुः यज्ज्ञात्वा मृत्युमत्येति नान्यः पंथा अयनाय विद्यते’ ‘तं वै ज्ञात्वा मृत्युमत्येति जंतुर्नान्यः पन्था दुःखविमुक्तिहेतुः’ इत्यादिबहुतरप्रमाणबलात्परमशिवतत्त्वावगमस्यैव तथात्वोपदेशानादित्याशंक्याह **स्वविषयकेति** स्वविषयकबोधः स्वस्वरूपावगमस्तस्य योऽकुरस्तस्य दले पर्णाविव स्थितौ द्वासुपर्णासयुजेत्यादिश्रुतेः। न केवलं सकलदेवसामान्यवाचिनामवन्नाम किंतु समस्तवेदार्थगर्भितं मुख्यमित्याह **श्रुतेरित्यादि**।श्रुतेर्वेदराशेर्यदंतः मध्यभागस्तत्र गोपायिततरं यद्रहस्यं तस्य आदातिरादरणं तत्र चरौ चराविवस्पृशौ वेदान्तसंवेद्याखिलाशयास्पदाद्वैतब्रह्मप्रतिपादकावित्यर्थः । भवविटपिनः संसारमहीरुहस्य यानि बीजानि अनादिवासनात्मकाः प्राणिदोषास्तेषांसमूहस्य दलने चूर्णीकरणे घरट्टग्रावाणौ तण्डुलादीनां पिष्टीकरणोपयुक्तपाषाणविशेषाविवावस्थिताविस्यर्थः ॥ ४ ॥

अत्र च 'मनोवाक्कायकर्मभ्यःकृतं कर्म शुभाशुभम् ॥ भुंजान एव मुच्येत नान्यथा कल्पकोटिभिः ।
कायिकं वाचिकं हार्दमुत्तमं तूत्तमोत्तरम् ॥ कायेन मनसा वाचा कर्मणा दुष्कृतं कृतम्' इत्यादि-
प्रमाणमात्रपरिशीलनपर्यवसितधीमतां केषाचिदर्थान्तराशंकापनोदनव्याजेन पुनस्तमेव स्तौति शार्दू-
लविक्रीडितेन

स्वामिन्कर्माणि कायिके न जरया शक्तोऽस्मि नो मानसे
चांचल्यान्मनसो न निर्धनतया पूर्तेष्टदानादिके ॥
तस्माद्वाचिककर्मणैव विदुषा साध्यं विदित्वा भवन्
नाम्नामष्टशतं निरुच्य जनुषः साफल्यमीहे तमाम् ॥ ५ ॥

**स्वामिन्निति** । स्वामिन्निति संबुद्धिः हे स्वामिन्प्रभो करचरणाद्यखिलावयवानामपाटवेन
**जरसा** जरया कायिके कर्मणि नाहं शक्तोऽस्मि नापि मानसे ध्यानादौ संशयाकारवृत्तिमत्स्वरूपत्वेन
मनसो निसर्गतश्चाञ्चल्यात् । नवा पूर्तेष्टदानादिके । तेषां धनैकसाध्यत्वेन तदभावात् । तथा च
कायिकवाचिकमानसिकयोरेकैकस्यवाप्याश्रयेण उक्तबाधाद्वाचिकमेव कर्म प्रकृतोपयुक्तमित्यार्थवर्ये-
रादिष्टमित्यष्टोत्तरशतशिवनामनिर्वचनेनैव जन्म सफलयामीत्यर्थः ॥ ५ ॥
अथ तेषां नाम्नां समूलकत्वध्वननपुरःसरं स्वग्रन्थनाम निर्दिशति

शिवनामकल्पवल्ल्याः शिवचरितानन्दकाननभवायाः ॥
रुचिरं रत्नावालं रचये सत्पयरत्नवरैः ॥ ६ ॥

**शिवनामेति** । शिवरहस्ये हि 'शरीरार्धमहम्' इत्यादिना द्वाविंशतिश्लोकान्पठित्वा
'शिवो महेश्वर' इत्यादिभिस्त्रयोदशभिः श्लोकैरष्टोत्तर शतनामान्युक्त्वा 'इमानि दिव्यनामानि' इत्याद्-
योऽष्टौ श्लोकाः पठिताः शंकरसंहितायां तेष्वेव प्रथमभागस्याद्यात्यश्लोकावेव पठित्वा नामोत्तरभागे
'एवमष्टोत्तरशतम्' इत्यादिना नव श्लोका अन्य एव पठिता इति स्थितिः । तत्र 'नामकल्पलतेयं मे
सर्वाभीष्टप्रदायिनी' इति शिवरहस्ये त्रयोदशश्लोक्यामन्वर्थकनामनिर्देशो दृष्ट इत्याशयेन कल्पवल्ल्या
इत्युक्तिः । शिवचरितं रहस्यसंहितारूपमेवानन्दकाननं काशीश्वरमोदप्रदं वनमथवा शिवचरितमा-
नन्दकं येषां ते शैवाः विष्ण्वादयस्तेषामाननानि तत्र भवायाः उत्पन्नाया रुचिरं रत्नानामावालमा-
वापः सिच्यमानजलधारणयोग्या वेदिका 'स्यादालवालमावाप' इत्यमरः । सत्पद्यान्येव सप्तदशाधि-
कशतसंख्यानि रत्नवराणि तैः कृत्वा रचये करिष्यामि । 'वर्तमानसामीप्ये वर्तमानवद्वा' इत्यादिना
लडात्मनेपद्युत्तमैकवचनं किंच कटपयवर्गाश्रराणामेकादिसंख्यापरतया प्रसिद्धत्वेन सत्पय (११७)
स्योक्तसंख्यापरत्वात् । अत्र च 'नाम्नामष्टशतं निरुच्य जनुषः साफल्यमीहे तमाम्' इत्यत्र
निखिलनिगमागमप्रमाणीकृततात्पर्यकत्वेन निष्कृष्टार्थप्रतिपादकत्वलक्षणस्य निर्वचनस्य प्रागर्थासिद्धि
विना अनुपपत्तेः । प्रकृतस्तवप्रतिपाद्याष्टोत्तरशतसंख्याकान्यपि नामान्यनादिसिद्धानि । तत्तन्त्रैवागमेषु
शिवरहस्यादिषु स्पष्टप्रतिपादितानि इत्याविष्कृतामीयतस्तद्व्यत्र व्याख्यायते। तदुक्तं शिवरहस्ये 'पा-

चातिविह्वलः ॥ दुःखितं सा तदा प्राह संप्रेक्ष्याघ्राय मूर्धनि ॥ संमृज्य नेत्रे पुत्रस्य कराभ्यां कमलेक्षणा ॥ क्षीरं वत्स कुतोऽस्माकं वने निवसतां सदा । अधनानां पुरास्माभिर्महादेवो न पूजितः ॥ पूर्वजन्मनि यद्दत्तं शिवमुद्दिश्य बाडव ॥ तदेव लभ्यं नान्यत्तु विष्णुमुद्दिश्य वा प्रियम् ॥ निशम्य वचनं मातुरुपमन्युर्महामतिः ॥ बालोऽपि मातरं प्राह प्रणिपत्य पयस्विनीम् ॥ त्यज शोकं महाभागे महादेवोऽस्ति चेत्क्वचित् ॥ अचिराद्वा चिराद्वापि क्षीरोदं साधयाम्यहम् ॥ तां प्रणम्यैवमुक्त्वा च तपः कर्तुं प्रचक्रमे ॥ तमाह च तदा माता कुर्वन्तमतिशोभनम् ॥ अनुज्ञातस्तया तत्र तपस्तेपे सुदुष्करम् ॥ हिमवत्पर्वतं प्राप्य वायुभक्षः समाहित ' इत्यादिना तपश्चर्यमुक्त्वोक्तं ' रूपं स्वमेव भगवानास्थाय परमेश्वरः ॥ दर्शयामास विप्राय बालेन्दुकृतशेखरम् ॥ क्षीरं धारासहस्रं च क्षीरोदार्णवमेव च ॥ दध्योदनार्णवं चैव घृतोदार्णवमेव च ॥ फलार्णवं च बालस्य भक्ष्यलेह्यार्णवं तथा ॥ आपूपगिरयश्चैव तदाऽतिष्ठन्समंततः ॥ उपमन्युमुवाचेदं सस्मितो भगवान्प्रभुः ॥ भुंक्ष्व भोगान्यथाकामं बान्धवैर्वत्स पश्यताम् ॥ उपमन्यो महाभाग तवैषाम्बा हि पार्वती ॥ मया पुत्रीकृतोऽस्यद्य दत्तः क्षीरार्णवस्तव' इति । सत्यादृतौ द्रुहिणः स चोक्त एव । मृतिहृतौ मार्कण्डेयः तच्च मृत्युञ्जयनामवैभवे स्फुटीभविष्यति । स्वल्पसेवातितोषे श्रीदः कुबेरः । तथाहि कश्चित्काशीस्थो द्विजबालः कलहद्यूतादितत्परः कामं दुर्जनसंगत्या दुराचाररतः खलो मातापितृदूरीकृतोऽनवलम्बनात्खिन्नमनाः किं करोमि क्व यामि कथं वा धनं प्राप्नुयामित्येवं पुनः पुनरितस्ततोऽनुधावमानः क्षुधितः कथंचिद्दैवयोगात्कचित्पुण्यफलप्रभावैकसंवेद्यमनवद्यान्तर्मुखाशेषविद्वज्जनवृन्दविलासोल्लसितमुमाकान्तालयमद्राक्षीत् । ततस्तत्रत्यमशेषाभिलषितमणादिकमपहर्तुमन्तर्मन्दिरमाविश्यात्यादरेणैवात्मयिवसनदशाकृतवर्त्यां परमशिवानुपातिनीं प्रदीपच्छायां निराकार्षीत् । ततः प्रसन्नो भगवानमर्यादैश्वर्याकरादिवसाम्राज्याधिपत्यं दत्तवानित्यादिबहुतरं प्रपंचितं काशीखण्डे ॥ संकष्टोच्छित्तावमृतमन्थेष्टुदेवाः । तच्च प्रचण्डोद्दण्डसंवर्तकालदावानलज्वालामालाकुलितकालकूटविषापहरणादिना प्रसिद्धम् । तथा चोक्तमभियुक्तैः 'दृष्ट्वा कौस्तुभमप्सरोगणमपि प्रक्रान्तवादा मिथो गीर्वाणाः कति वा न सन्ति भुवने भारा दिवः केवलम् ॥ प्रक्रान्ते गरले द्रुते सुरगणे निश्चेष्टिते विष्टपे मा भैष्टेति गिराविरास धुरि यो देवस्तमेव स्तुमः ' इति मूलकृताप्युक्तं शिवस्तवे 'विकुण्ठो वैकुण्ठो गतधृतिरिवासीच्छतधृतिः प्रचेता निश्चेता निभृतमघवामास्तमघवा ॥ कृतान्तोऽभूत्तान्तो भसितभवनं विश्वभवनं विलोले काकोले शिव शिव भवानेव शरणम् ' इति । उपेक्षायां सभ्यामभयदाने दक्षः तच्च दक्षाध्वरहेरतिनामनिर्वचने व्यक्तिर्भविष्यति । हितोपदेशे श्रीरामः तच्च उपदेशतात्पर्यगोचरनिरतिशयानन्दानुभवादिरूपपरमप्रयोजनप्राप्तिफलकशिवगीतादौ प्रतिपदं प्रसिद्धम् । उत्तमत्वे वेदाः कः सर्वोत्तम इति प्रश्ने कृते ऋग्वेदादिभिश्चतुर्भिः प्रतिपादितस्य शिव एवेत्यर्थस्य शैवे काशीखण्डादौ च स्फुटत्वात् । अपेक्षमानत्वौदार्यादिगुणजातस्यान्यत्राभावेऽप्यन्याहृशानामेव तुल्यबलप्रभावानामनादिसंसिद्धशास्त्रादिगुणानामाश्रयत्वेनान्योऽप्यासेव्यताम् ॥ तथाचोक्तं 'वात्सल्याद्भयप्रदान

करणादार्तार्तिनिर्वापणादौदार्यादघशोषणादगणितश्रेयःपदप्रापणात् ॥ सेव्यः श्रीपतिरेक एव जगतामेते यतः साक्षिणः प्रल्हादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः' इति तथा च प्रल्हादादिसाक्षिका ये वात्सल्यादयो गुणास्तदाश्रयत्वेनान्यस्यापि सेव्यत्वापत्त्या शम्भुरेव सेव्य इत्यवधारणाश्रयणमसंगतमेवेत्यत आह **अशिश्वित्यादि**। शिशुपशुवधूराक्षसभिन्नैः साक्षिभिरित्यर्थः । तत्र षण्णामपि साक्षिणा साक्षित्वायोग्यशिशुत्वादिधर्माक्रान्ततया प्रत्युत बाधकप्रमाणमात्रोपयोगित्वान्नान्यसेवनं सिद्ध्यतीति भावः । यद्यप्युपमन्योः शिशुत्वेन बाधकप्रमाणोपयोगित्वमेव तथापि बहुतरसाधकप्रमाणान्तःपरिगणनात्प्रकृतोपयोगित्वमवगन्तव्यम् । शिवनामभजनातिरिक्तोपायान्तरेष्वसारप्रयुक्तमसामर्थ्यमावेदयंस्तदेव पुनर्द्रढयति स्रग्धरया ।

'नाथ त्वच्छक्तितत्त्वाव्ययचरितभगव्यूहमूर्त्यङ्गसाङ्ग-
प्रत्यङ्गोपाङ्गकृत्यागमभजनकलांशादिनिष्कर्षमूढाः ॥
त्वन्नामापि त्यजामो यदि दुरितहरं सान्वयायाः कृतार्थाः
केनोपायेन जायेमहि कलिहतके जन्मभाजो वयं हि' ॥ ३ ॥

**नाथेति** । शक्तयश्च तत्वानि च अव्ययानि च चरितानि च भगश्च व्यूहश्च मूर्तयश्च अङ्गानि च सांगानि च प्रत्यङ्गानि चोपाङ्गानि च कृत्यानि चागमाश्च भजनानि च कलाश्च अंशादिश्चेति तेषां योऽयं निष्कर्षस्तत्त्वागमस्तस्मिन्मूढाः सामर्थ्यशून्याः सन्तः कलिहतके जन्मभाजो वयं यदि दुरितहरं त्वन्नामापि त्यजामस्तदा सान्वयाः कृतार्थाः केनोपायेन जायेमहि न केनाप्युपायेनेत्यन्वयः। असामर्थ्यद्योतनाय **कलिहतक** इति विशेषणं काकाक्षिन्यायेन जन्मनि कृतार्थतायां चेत्युभयत्रान्वेति । कलिहतके कलावित्यर्थः । विशेषणस्य परनिपातनात् । हतको हिंसकः पापकारीति यावत् । तथाच पापैकसाधनीभूतेऽस्मिन्कलियुगे जन्मशालिनो वयं कथं त्वन्नामभजनमपि विना कृतकृत्या भवेमेत्यर्थः । तत्र शक्तयो यथा इच्छाज्ञानक्रियादिरूपाः तदुक्तं शैवागमे 'इच्छाज्ञानक्रियारूपास्त्रिशूलं शक्तयो मताः' इति । तत्त्वानि षट्त्रिंशत् यथा शिवः शक्तिः सदाशिवः ईश्वरः शुद्धविद्या चेति पंच शुद्धतत्वानि प्रकृतिबुद्धिरहंकारो मनश्चेति ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पच तन्मात्राणि पञ्च भूतानि पञ्च इतिचतुर्विंशतितत्वानि अशुद्धानि माया कालो नियतिः कला अविद्या रागः पुरुषश्चेति सप्तशुद्धाशुद्धानि इति षट्त्रिंशत्तत्वानि अव्ययानि। यथा उक्तं च विष्णुपुराणे 'ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः॥ स्रष्टृत्वमात्मसंबन्धो ह्यधिष्ठातृत्वमेव च ॥ अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे॥' इति। चरितानि परमशिवचरितानि दारुवने भिक्षाटनप्रभृत्यनेकानि तत्तच्छैवागमप्रसिद्धानि भगोयथा 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ॥ ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इति । व्यूहो यथा 'शिवो भवे हरश्चैव मृडश्चैव तथा पर' इति। मूर्तयो यथा सोमधार्युमासनेतवृषभारूढनृत्तरूपवैवाहभिक्षाटनकामारिकालकालत्रिपुरारिजलन्धरविध्वंसगजारिवीरभद्रहर्यर्धहर... ्पदेशानुग्रहविषपहारिचक्रदानसरूपविघ्नप्रसादोमार्धरूपैकपादसुखासनदक्षिणामूर्तिलिङ्गभागाख्याः

वेत्युवाच । शरीरार्धमहं शम्भोर्येन प्राप्स्यामि केशव ॥ तदिदानीं समाचक्ष्व स्तोत्रं शीघ्रफलप्रदम् ॥१॥' अत्र च शिवरहस्ये सप्तमेंऽशे त्रयोदशेऽध्याये हिमवत्पर्वतस्थे मानससरसि मानसेश्वराहिकण्ठेश्वरसिद्धेशलिंगेशगौरीलिंगात्मकनामचतुष्टयशालि शिवलिंगस्य महात्म्यप्रकरणे कण्वकश्यपसंवादः 'तदा कण्वः समागत्य स्नात्वाब्धेर्मानसे जले। मानसेशं समभ्यर्च्य काश्यपं प्राह सादरम्॥ कण्व उवाच 'संसारदाहखिन्नानां मर्त्यानामकृतात्मनाम् ॥ घोरसंसारविच्छेदः कथं भवति सत्वरम्' इत्यादि प्रश्ने कश्यप उवाच'शिवाभिधं महः सेव्यं सर्ववेदान्तसंश्रुतम्'इत्यादिना शिवभक्तिनामभस्मरुद्राक्षादिमहिमानमुक्त्वोक्तम्। 'अत्र पूर्वं शिवा नित्याऽप्याविर्भूता हिमालये ॥ चक्रे प्राप्तशिवाप्यत्र शिवं प्राप्तुं तपो मुदे ॥' प्राप्तः शिवो यया परमशिवैक्यं प्राप्ताप्यनादिभूता चिच्छक्तिरखिललोकानन्दावाप्तये पुनः शिवं प्राप्तुमिव तपश्चक्रे इत्यन्वयः । इत्येवं गौरीतपोविशेषादिमहिमानमुक्त्वा 'ध्येया त्वमेव सर्वेषां भुक्तिमुक्तिप्रदायिनी ॥ त्वयापि ध्यायते देवी ध्यातव्यं तव किं शिवे' इत्यादिविष्णुकृतप्रश्नस्य प्रत्युत्तररूपश्च निरूपो देवीप्रश्नोऽयं पार्वत्युवाचेति । यादृशेन स्तोत्रेण शंभोः शरीरार्धमहं प्राप्स्यामि तादृशं स्तोत्रं समाचक्ष्वेत्यन्वयः । केशवेति साभिप्रायकसंबुद्ध्या त्वया हि येन ध्यातेन हर्यर्धेश्वरात्मकत्वेन प्रसिद्धं शरीरार्धं लब्धं तदेव ध्यायते मयेति ध्वनितं तदुक्तं वातुलशुद्धे पंचविंशतिमूर्तिप्रकरणे 'त्रयोदशं हरेरर्धमर्धनारी चतुर्दशम्' इति । विष्णुरुवाच 'शरीरार्धं महेशस्य प्राप्तमेव त्वया शिवे ॥ तथापि पृच्छसे देवि यतो वात्सल्यभावतः ॥ २ ॥' वात्सल्याशयतः पृच्छसे पृच्छसीत्यर्थः । 'त्वया ततोऽहं वक्ष्यामि स्तोत्रमेकं शिवप्रदम्' इति त्वयेति तुभ्यमित्यर्थः । स्तोत्रं स्तव्यनिष्ठगुणाभिधानरूपस्तुतिप्रतिपादकशब्दसंदर्भरूपमित्यर्थः । एकं मुख्यं तत्र हेतुः शिवप्रदमिति मङ्गलप्रदत्वात्परमशिवाभिन्नकैवल्यप्रदत्वाद्वा मुख्यमित्यर्थः । 'पुत्रोऽहं तव कल्याणि ततो वात्सल्यभावतः ॥ मया सह त्वया देवि शिवे संभाषणं कृतम्' इति ॥ ३ ॥ वात्सल्यस्य भावः सत्ता शिव इति विषयसप्तमी संभाषणं प्रश्नरूपं तथा च वत्सभूतेन मया सह 'शरीरार्धमहं शम्भोर्येन प्राप्स्यामि केशव' इत्यादिना यच्छिवविषयकप्रश्नरूपं संभाषणं कृतं तद्वात्सल्यभाव एव कृपातिशयविशेषप्रयुक्तमेवनतु मदीयसामर्थ्यप्रयुक्तमित्यर्थः । 'दक्षहस्तांगुष्ठनखान्महाराज्ञः समुत्थितः । महामत्स्याकृतिः श्रीमानादिनारायणोविभुः' इत्यादिना देवीपुत्रत्वेनापि विष्णोः प्रतिपादनादिति । स्वयं पुत्रभावं प्राप्तः सन्परमपुरुषो विष्णुः परां शक्तिं संस्तोतुमुपसंक्रमते । 'तव यत्पादपद्मं तत्सर्ववेदान्तसंस्तुतम् ॥ दृष्टं मया कृतार्थोऽस्मि त्वत्पादांबुजवीक्षणात् ॥ यं पश्यसि जगद्वंद्ये कृपया तमनेकधा ॥ पूजयन्ति सुराः सिद्धा मुनयश्च न संशयः ॥ रम्भाद्याः सुभगा जातास्त्वत्पादांबुरुहार्चनात् ॥ त्वत्पादपद्मं सततं ध्यायते कमलादिभिः ॥ त्वमादिशक्तिः परमा सर्ववेदान्तसंस्थिता ॥ त्वमेवोंकाररूपा त्वं सर्ववेदान्तरूपिणी ॥ त्वमाद्यन्तविहीना त्वं सच्चिदानंदरूपिणी ॥ विज्ञानसागरा साक्षाज्ज्ञानधाराविमोहिनी ॥ कलाकाष्ठामुहूर्तादिकालोन्मथनकारिणी ॥ त्वत्त एव समुत्पन्ना वयं ब्रह्मादयः सुराः ॥ त्वत्त एव समुत्पन्ना लोकाः सर्वेऽपि शांभवि॥' इति । समुत्पन्ना आविर्भूताः लोकाश्चतुर्दश भुवनानि 'तव नेत्रत्रयं चंद्रः सूर्योऽ

ग्निश्च महेश्वरि ॥ सोमसूर्याग्निलोचनेत्यर्थः ॥ तवैव मूर्तयः सर्वाः पवनाद्याः शिवप्रिये ॥ त्वदन्यं दृश्यते नात्र त्वमेव सकलं शिवे ॥ निष्कलापि त्वमेवासि सकलासि त्वमीश्वरि ॥ सकलनिष्कलभावं विवृणोति 'त्वमेव सकला देवि सृष्टिस्थित्यन्तकारिणी ॥ त्वमेव निष्कला देवि सर्वोपाधिविवर्जिता ॥ प्राप्या त्वमेव सर्वेषां मुक्तिरूपा स्वभावतः ॥ त्वामीदृशीं विदित्वैव सच्चिदानंदलक्षणाम् ॥ भजन्ति मुनयः सर्वे नित्यं वेदैः स्तुवन्तिच ॥ ईदृशी त्वं निराकारा साकारेवाथ दृश्यते ॥ यतस्त्वमपि विज्ञानमतो रूपं न ते ध्रुवम् ॥ त्वं तपोज्ञानयोगानां फलदासि शिवप्रिये ॥ त्वामुद्दिश्यैव मुनिभिः सततं तप्यते तपः॥ संतुष्टा तपसा देवि ददासि परमं पदम्॥ सुप्रीतायास्तवोमेऽत्र नादेयं वस्तु दृश्यते' ॥ उमे इति संबुद्धिः । सुप्रीतायास्तव अदेयं वस्तु न दृश्यते । सर्वं त्वया प्राप्तमेवेत्यर्थः । शिवे त्वयैव सृष्टानि वैकुंठादिपदान्यपि ॥ तानि दत्तानि चास्मभ्यं त्वयैवाचिंतया ध्रुवम् ॥ यतः शिवस्त्वमेवासि ततो दत्तं शिवेन यत् ॥ तत्त्वयैव ध्रुवं दत्तं सर्वकल्याणसंश्रये' इत्येवं परां शक्तिं प्रस्तुत्य परमेश्वरप्रतिपादकनामोत्कर्षं दर्शयति। 'रत्नराशौ मनोज्ञानि रत्नानीव पुरा मया॥ वेदराशौ गृहीतानि शिवनामानि शोभने ॥ संत्यनंतानि नामानि महादेवस्य शोभने ॥ तानि सर्वाणि नामानि पावनानि न संशयः ॥ तत्र दिव्यानि नामानि प्रसिद्धानि वरानने ॥ बहून्यपि ततस्तेषामावृत्तिरतिदुर्लभा ॥ अस्तिगुह्यतमं देवि नाम्नामष्टोत्तरं शतम् ॥ शंभोरहं प्रवक्ष्यामि पठतां शीघ्रकामदम् ॥ अस्तीति वर्तमानव्यपदेशान्नामानि शिवेनैवोद्धृतानि अधुनापि वर्तन्त इत्यनादिसिद्धत्वमाविष्कृतामिति। अस्य सर्वकामप्रदत्वमुत्तररामायणे रावणदिग्विजययात्रायां नर्मदातीरे शिवपूजाप्रकरणेऽप्युक्तं यथा 'ततस्ते राक्षसाः स्नात्वा नर्मदाया वरांभसि ॥ उत्तीर्य पुष्पाण्याजह्रुर्बल्यर्थे रावणस्य तु ॥ नर्मदापुलिने ह्यस्य शुभ्राभ्रसलिलप्रभे ॥ राक्षसेन्द्रैर्मुहूर्तेन कृतः पुष्पमयो गिरिः ॥ पुष्पेषूपहृतेष्वेव रावणो राक्षसेश्वरः॥ अवतीर्णो नदीं स्नातुं गंगामिव महागजः ॥ तत्र स्नात्वा च विधिवज्जप्त्वा जप्यमनुत्तमम् ॥ इत्यादिना स्नानजपादिकमुक्त्वोक्तं 'यत्र यत्र स याति स्म रावणो राक्षसाधिपः ॥ जाम्बूनदमयं लिंगं तत्र तत्र स्म नीयते ॥ स तत्र कांचनमयं लिंगं संस्थाप्य सैकते ॥ अर्चयामास पुष्पैश्च गंधैरामोदगन्धिभिः ॥ लिंगं त्वपूजयद्रक्षो रावणो लोकरावणः ॥ जप्योपहारैः सततं गंधैः पुष्पैश्च नित्यशः ॥ बलिधूपप्रदानैश्च रावणो लिंगमार्चयत् ॥ सवादित्रनिनादैश्च शर्वमाराधयत्प्रभुम् ॥ घृतक्षीराभिषेकैश्च दध्ना चाप्युदकेन च॥ पदैर्को (?) यसंमि श्चैर्नामाष्टशतसंस्तवैः ॥ शुशुभे तत्र तल्लिङ्गं नानारत्नविभूषितम् ॥अर्चयित्वा तु तं देवं यदाचरति रावणः ॥ तत्सर्वं सिद्ध्यते तस्य विधिनार्चयतो हरमिति ॥ ६ ॥

अस्य श्रीपरमशिवाष्टोत्तरशतनामकल्पलतास्तोत्रमहामन्त्रस्य नारायण ऋषिः अनुष्टुप्छन्दः श्रीउमामहेश्वरो देवता। ॐ बीजम्। नमः शक्तिः। शिवाय कीलकम्। श्रीसांबसदाशिवप्रीतये जपादौ विनियोगः। मूलेन षडंगकरन्यासं कृत्वा ध्यायेत्। धवलवपुषमिन्दोर्मण्डले सन्निविष्टं भुजगवलयहारं भस्मदिग्धांगमीशम् ॥ हरिणपरशुपाणिं चारुचन्द्रार्धमौलिं हृदयकमलमध्ये शंकरं चिन्त-

तथा चोक्तं महाभारते ‘सत्येन ब्रह्मचर्येण लिंगमस्य यथास्थितम् ॥ समर्चयन्ति लोकाश्च महेश्वर इति स्मृतः’ इति अस्यायमर्थः। यथास्थित लिंगरूपेणाविर्भूतं न तु विष्ण्वाद्यवतारविशेषादिवद्रूपांतरेण तिरोहितं एवंभूतमपि लिंगं लोकाः समर्चयन्ति। तत्र न यथाकथंचिदवज्ञया किंतु सत्यब्रह्मचर्याद्यखिलनियमोपेतया परमया भक्त्या समर्चयन्ति। यतोऽतो महेश्वर इति। एतद्रूद्रेवानुशासनिकेऽप्यभिहितम्। ‘यस्य ब्रह्मा च विष्णुश्च त्वं च शक्रः सहामरैः॥ अर्चयध्वं सदा लिंगं तस्माच्छ्रेष्ठतरो हि कः’इति। अथवा ईशितृत्वे महत्त्वमुत्कृष्टत्वं स्वर्गादिरूपं यत्किंचिदीशितृत्वमिन्द्रादीनामप्यस्ति अत एव छन्दोगानां षड्विंशब्राह्मणे उत्पातशांतिप्रकरणे इन्द्रयमादिषु चेश्वरायस्वाहेतिमन्त्रप्रतीतिरदृष्टा तद्व्यावृत्त्यर्थं महेति इन्द्रादीनामपि ईश्वरत्वाच्छिवो महेश्वर इत्यर्थः। तथा च श्रुतिः ‘ध्येयः सर्वेश्वरः शंभुराकाशमध्यग’ इति। ‘सेन्द्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते’ इति भारतवचनाच्च। एतदभिप्रायेणैव ‘महेश्वरश्च सः’ इतिभारतवचनम्॥ महतः प्राणिनः इन्द्रादीन्प्रत्यपि यदस्येशितृत्वमिदमेतदीयेशितृत्वस्य महत्वमिति नतु महतामीश्वरो महेश्वर इति षष्ठीतत्पुरुषरूपव्युत्पत्त्यंतरप्रदर्शनपरम्॥ तथा सति व्यधिकरणत्वादुत्तरपदस्य ‘आन्महतः समानाधिकरणजातीययोः’ इत्यात्वाभावप्रसक्त्या महदीश्वरइत्येव स्यात्।एतेन ‘त्वमीश्वराणां महतामपीश्वरः’इति मूलं व्याख्यातम्। यद्वा ईश्वरत्वे महत्वं विशेषणमखिलजगदुपसंहारकारिणो रुद्रादपि विशेषं ख्यापयितुं व्याख्यर्थकादश्नोतेरंतर्भावितार्थादाशुकर्मणि वरट्च इत्यौणादिकवरटि चकारादुपधाया इत्वे च निष्पन्नस्येश्वरपदस्य संहारकसामान्यपरतया रुद्रेऽपि प्रवृत्तेः। व्याप्तिश्च व्यापकस्यात्मनोऽवच्छेदकशरीरनाशे सिद्ध्यतीति मरणरूपैव ‘गुरोर्व्याप्तिदिनं चैव’इत्यादिना तंत्रराजे तथाप्रयोगदर्शनात्। तेन त्रिमूर्तिसंहारिका चतुर्थीमूर्तिर्महेश्वर इत्यर्थः। सृष्टिस्थितिसंहारतिरोधानानुग्रहरूपपंचकृत्येषु त्रिमूर्तितिरोधानं बन्धो वा चतुर्थमूर्तेः कृत्यं निवृत्त्यादि कलाभिमुख्येन ब्रह्मादीनां पंचानामपि यथायथं सृष्ट्यादिपंचकृत्यकर्तृत्वस्यानेकशैवागमेषु प्रतिपादितत्वात्। उक्तं च शिवपुराणे‘ शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः॥ संहारवैद्यः सर्वज्ञः परमात्मेति मुख्यतः॥ नामाष्टकमिदं तस्य प्रतिपादकमीशितुः॥ आद्यं तु पंचकं तत्र शांत्यतीताद्यनुक्रमात्॥ संज्ञा सदाशिवादीनाम्’ इति महेश्वरस्य स्वरूपमपि तंत्रेषूक्तं ‘नानारूपधरो देवो नानाभेदसमन्वितः॥ नानाचिन्हसमोपेतो नानालीलाधरो हरः॥ तथा ‘जटामुकुटसंयुक्तमेकवक्त्रं त्रिनेत्रकम्। वरदाभयहस्तं च मृगीपरशुधारकम्॥ इदं रूपं महेशस्य रूपभेदमथो शृणु’ इति॥ तथा वातुलशुद्धेऽपि महेश्वरसहस्रांशाद्रुद्रदेवसमुद्भवः॥ महेश्वरस्य कोट्यंशाद्ब्रह्मविष्णुसमुद्भवः॥’ इति। तथा पाद्मे शिवराघवसंवादेऽपि ‘य एकः शाश्वतो देवो ब्रह्मवन्द्यः सदाशिवः॥ त्रिलोचनो गुणाधारो गुणातीतोऽक्षरोऽव्ययः॥ जाता सिसृक्षा तस्याथ वीक्ष्यात्मस्थं गुणत्रयम्॥ दक्षिणादसृजत्पुत्रं ब्रह्माणं वामतो हरिम्॥ ब्रह्मादेशान्महेशानं त्रीन्पुत्रानसृजत्प्रभुः’ इति। एवमन्यत्रापि ‘परः शिवः शिवाच्छक्तिः शक्तेर्नादसमुद्भवः॥ नादाद्बिन्दूदयस्तस्मात्सदाशिवसमुद्भवः॥ सदाशिवान्महेशस्य तमोरुद्रसमुद्भवः॥ रुद्राद्विष्णुस्ततो ब्रह्मा ततः सर्व-

मिदं जगत् ॥ इति एतत्सर्वं महेश्वरत्वमेवोक्तं (?)जगत्तिरोधानकर इति । बन्धात्मकचतुर्थकार्यकर इत्यर्थः श्रुतीरित इति 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः॥तस्य प्रकृतिलीनस्य यः परः स महेश्वरः॥तमीश्वराणां परमं महेश्वरम्' इत्यादि श्रुतिप्रतिपाद्य इत्यर्थः। एवंभूतो महेश्वरः पंचविंशोऽपि चंद्रशेखरादिभेदभिन्नपंचविंशतिमूर्त्यात्मकोऽपि परशिवाख्यचतुर्थशिव एव त्वम्।तत्प्रभेदरूपत्वादिति भावः।पंचविंशतेर्महेश्वराणां प्रत्येकसंख्यापूरकत्वाविशेषात्प्रयोगो नानुपपन्नः । अतएव आपस्तंबकल्पे 'पदं त्रेधं विभज्य तृतीयमुत्तरतो गार्हपत्यस्य शांते भस्मन्युपपत्तिस्तृतीयमाहवनीये तृतीयं पत्न्यै प्रयच्छतीति' त्रयाणामपि तृतीयपदेनैव व्यवहारः।एतेन पंचदशान्याज्यानीति व्याख्यातम्॥'शिवमद्वैतं चतुर्थमन्यन्ते' इति श्रुतिसिद्धो हि तुरीयः। शिवपुराणेषु परशिव इति व्यवह्रीयते।आगमेषु तु स त्रिविधः परमः सदाशिवो महेश्वर इति तत्र सदाशिवःपंचविधः। कर्तृकर्मसदाख्यौ द्वौ मूर्तामूर्तसदाख्यौ च द्वौ शिवसदाख्यश्चैकः इति।महेश्वरस्तु पंचविंशतिविध इति । तत्तत्स्वरूपनिरूपणपूर्वकमेतत्सर्वं वातुलशुद्धतत्त्वभेदपटले प्रपञ्चितम्।संग्रहेऽपि'शिवमेकं विजानीयात्सदाख्यं पंचधा भवेत् ॥महेशस्तुमहासेनः पंचविंशतिशभेदकः ॥एतद्वे तत्त्वसंयुक्तमेकत्रिंशदिति स्मृतम्' इति । अथवा सांख्यमतरीत्या त्वं पंचविंशतत्त्वपरोऽपि षड्विंशतत्त्वमपि उभयथापि श्रुतीरित इत्यर्थः । तथा च मायां त्विति श्रुतेरुपबृंहणं वायुसंहितायाम्'अथवा त्रिगुणं तत्त्वं मायेयमिदमव्ययम्॥मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्॥ मायाविक्षोभकोऽनंतो महेश्वरसमन्वयात् इति ।'पुरुषविशेष ईश्वर' इति महति पुरुषे ईश्वरपदस्य योगसूत्रे प्रयोगश्च ।यो वेदादावितिश्रुतेरुपबृंहणमपि तस्यामेवअत्र 'त्रयोविंशतितत्त्वेभ्यः परा प्रकृतिरुच्यते ॥ प्रकृतेस्तु परं प्राहुः पुरुषं पंचविंशकम् ॥यं वेदादौ स्वरं प्राहुर्वाच्यवाचकभावतः ॥ वेदैकवेद्यं यस्यादौ वेदांते च प्रतिष्ठितम् ॥ स एव प्रकृतौ लीनो भोक्तायं प्रकृतेर्यतः ॥ तस्य प्रकृतिलीनस्य परो यः स महेश्वर' इति प्रकृतेः पुरुषाणां च प्रवर्तकः षड्विंश इति भावः । इति सर्वं शिवम् ॥ वंशस्थाख्यं वृत्तमिदं तथा च पैंगलसूत्रं 'वंशस्थं ज्तौज्रौ' ग प्रतिपादं जगणः । ⏑ ।, तगणः ⏑ ⏑ ।, जगणः। ⏑ ।, रगणः ⏑ । ⏑, एतद्वृत्तं वंशस्थाख्यं भवतीत्यर्थः । तदुक्तं वृत्तरत्नाकरे 'जतौ तु वंशस्थमुदीरितं जरौ' इति द्वादशाक्षरात्मकजगतीछन्दोरूपं समवृत्तमितिलक्षणात् ।

## ॐ शंभवे नमः ।

शं भावयसि च भवसे शं च भवसि चेति वा देव ॥
त्वं देवदारुविपिने लिंगे प्रथितोऽस्यतः शम्भुः ॥ ३ ॥

शं सुखं भावयत्युत्पादयतीति शंभुः । 'शिवंकर' इतिश्रुतेः । यद्वा भवतिरयं प्राप्त्यर्थः शं सुखं भवते सुखं प्राप्नोति शंभुरानन्दवानित्यर्थः। 'आनंदो ब्रह्मेति व्यकः। भूप्राप्तावात्मनेपदी । तथाच शं भवते सुखं प्राप्नोति शंभुरानन्दवानित्यर्थः। 'आनंदो ब्रह्मेति व्यजानात्। आनंदाद्ध्येव खल्विमानि भूतानि जायन्ते आनंदेन जातानि जीवन्ति आनंदं प्रयंत्यभिसंविशंति' 'सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति। आनंदं ब्रह्मणो रूपं तच्च देवे व्यव-

यामि ॥ १ ॥ हरिणपरशुपदं वराभययोरप्युपलक्षणम् ॥ ' जपकाले तु मंत्रस्य ध्येयो देवश्चतुर्भुजः॥ वराभयपरश्वेणलसत्करसरोरुह ' इति कामिकोक्तेः ।

ॐ शिवो महेश्वरः शंभुः पिनाकी शशिशेखरः ॥ वामदेवो विरूपाक्षः कपर्दी नीललोहित ॥ १ ॥ एषु नवसु नामसु प्रथमं निर्वक्ति

## ॐ शिवाय नमः ॥

प्रकृत्या नैर्मल्यादमलगुणयोगादपि शमाज्जगत्याधारत्वाज्जगदमृतदानाच्च भवतः ॥
बलादिच्छाशक्तेः मथितपुरि भद्रश्च इति प्रतीतस्त्वं लिंगे त्रिपुरहर तस्मादसि शिवः १

**प्रकृत्येति** । प्रकृत्या शिवः । स्वभावतः शोभनरूप इति यावत् । शोभनत्वं चानन्दघनत्वं नैर्मल्यादनादिजीववर्याणवकार्मणमायीयाख्यमलत्रयाभावलक्षणत्वं शुद्धत्वम्। अणुर्जीवस्तस्यानादिजीवितापावकः अविद्यासंबंध आणवं मलम् ॥ अनादिकर्मफलं वासनारूपं कार्मणम्॥ अस्ति प्रकाशत इति व्यवहारयोग्यसामग्र्यां सत्यामपि नास्ति न प्रकाशत इति व्यवहारयोग्यत्वरूपमावरणं मायीयं मलमिति ।तादृशमलत्रयाभाववत्वं चाकर्मवश्ये सर्वज्ञे परमात्मनि स्वभावत एव संभवति इति बहुतरं तच्छैवागमेषु प्रपंचितं तथाचोक्तं वायुसंहितायाम् 'अनादिमलसंश्लेषप्रागभावात्स्वभावतः॥ अत्यन्तपरिशुद्धात्मेत्यतोऽयं शिव उच्यते' इति।अथवा शिवशब्दः कल्याणगुणवचनः 'श्वःश्रेयसं शिवं भद्रं कल्याणं मंगलं शुभमित्यमरः।शिवाःशोभना गुणा अस्य सन्ति इति शिवःअर्शआदेराकृतिगणत्वान्मत्वर्थीऽच् प्रत्ययः । शोभनगुणाश्रय इत्यर्थः । तदप्युक्तम्'अथवाऽशेषकल्याणगुणैकायन ईश्वरः॥शिव इत्युच्यते सद्भिः शिवतत्वार्थवेदिभिः' इति।यद्यप्यत्र परमशिवस्य निष्कलत्वाद्गुणाः कथमपि न संभवंति निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम् ॥ अचिन्त्यमव्यक्तमनंतरूपं शिवं प्रशांतममृतं ब्रह्मयोनिम् ' इत्यादिश्रुतेः ॥ 'शिवतत्वं महासेन निष्कलं त्विति कीर्तितम्' इतिवातुलशुद्धवचनाच्च । तथापि 'स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् । यः स्त्र्यन्नपानादिविचित्रभोगैःस एव जाग्रत्परितृप्तिमेति । सृष्ट्यर्थं सर्वतत्वानां लोकस्योत्पत्तिकारणत् ॥ योगिनामुपकाराय स्वेच्छया गृण्हते तनुम् ' इति ' तथैव योगिनां चापि ज्ञानिनां मन्त्रिणां तथा ॥ जपपूजानिमित्ताय निष्कलं सकलं भवेत् ' इति श्रुतिवातुलशुद्धवचनशुद्धात्पराशक्तिपरिकल्पितगुणानादाय तथा व्यपदेश इत्यवगन्तव्यम् । अथ वा शमादिति श्याम्यति इति शिवः शांत इत्यर्थः 'उमासहायं परमेश्वरं शिवं त्रिलोचनं नीलकंठं प्रशान्तम् ' इति श्रुतेरिति । शिवादयश्चेतिहैमव्याकरणसूत्रेण क्विनि इत्वमलोपयोश्च रूपमिति सुभूतिचन्द्रः । अथवा जगत्याधारत्वाज्जगत्याः प्रपंचस्याधार आश्रयस्तस्य भावः तस्मात् । अथवा शेते असम्बन्धेन वर्ततेऽस्मिन्सर्वमिति शिवः । सर्वाधारकमित्यर्थः । 'सर्वनिघृष्वरिष्वलिष्वशिवपट्वप्रह्वेष्वा अस्वतंत्र' इत्यौणादिकान्निपातनात्तंत्रपद्रोक्तकर्तृभिन्नेऽधिकरणेऽर्थे रूपं सर्वकारणीभूतचिच्छक्तेरप्याधारतया परमशिवस्यैव जगदाधारत्वात् ॥ तथा च श्रुतिः'मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥' यो योनिं योनिमधितिष्ठते । कोयस्मिन्निदं

संचविचैति विश्वम्। तमीशानं वरदं देवमीड्य निश्वाय्येमां शांतिमत्यंतमेति । आधारमानंदमखंड-बोधं यस्मिल्लयं याति पुरत्रयंच' इत्यादिरिति ।**भजदमृतेति**। भजनमुपासनम् भवत इत्यत्र विषयत्वं षष्ट्यर्थस्तस्यभजने अन्वय. तथा च भवद्विषयकोपासकानाममृतदानाचेत्यर्थः । अथवा वष्टि-लोकहितमिति शिवः । लोकाना भजतां हित परमामृतरूपं वष्टि इच्छति ददातीति यावत् । वशकान्ताविति धातोः पचाद्यच् । पृषोदरादित्वात्साधुत्वम् । वर्णस्य व्यत्यये अकारस्य इकारादेशे च शिव इति रूपसिद्धिः । कान्तिरिच्छा । 'हिंसिधातोः सिंहशब्दो वशकान्तेः शिवः स्मृतः॥ वर्णव्यत्ययतः सिद्धः पश्यकः कश्यपो यथा' इत्यभियुक्तोक्तेः। तथा चोक्त महाभारते 'समेधयति यन्नित्यं सर्वार्थानामुपक्रमम् ॥ शिवमिच्छन्मनुष्याणां तस्मादेव शिवः स्मृतः' इति । अथवा वष्टि इच्छाश्रय इत्यर्थ. । रूपसिद्धिः पूर्ववदेव । सा चैषा चिद्रूपा पराशक्तेर्भेद एव । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इतिश्रुतेः । वातुल-शुद्धेऽपि 'शिवस्य तु परा शक्तिः सहस्रांशुसमुद्भवः ॥ पराशक्तेः सहस्रांशादादिश क्तिसमुद्भवः ॥ आदिशक्तिसहस्रांशादिच्छाशक्तिसमुद्भवः' ॥ तथा 'शक्तिराज्ञापरा शैवी चिद्रूपा परमेश्वरी॥ शिवेऽनतिप्रत्यखिलं यथा कारणभूतये' इति । शिवपुराणेऽपि 'तस्यांकमध्यमारूढा शक्ति-रिच्छाव्यया परा ॥ महालक्ष्मीरिति ख्याता श्यामा सर्वमनोरमा' इति ॥ बलादिच्छाशक्तेरित्यत्र बलशब्द आश्रयत्वपरः। इच्छाशक्त्याश्रयत्वादित्यर्थः। भद्रश्रव इति भद्रकर्णह्रदइतिप्रथिता प्रसिद्धा या पूः पुरं क्षेत्रविशेष इति यावत् । तत्र त्वं लिंगे शिवेश्वरत्वेन प्रतीतो अवगत इत्यर्थः । अष्टषष्टि-क्षेत्रगणनावसरे 'भद्रकर्णह्रदे शिवम्' इति काशीखण्डात्पाद्माच्च । **त्रिपुरहरे**ति संबुद्धिः। **तस्मादसि शिव इति** । तस्मात्त्वमुपदर्शितनैर्मल्यादिहेतुसमूहाच्छिवोऽसि शिवपदप्रतिपाद्यो भवसीत्यर्थः । इदं च श्रुतिप्रसिद्धं नाम 'नमः शिवाय च शिवतराय च' 'तस्मात्सर्वगतः शिवः न सन्न चासच्छिव एव केवलः सर्वमन्यत्परित्यज्य शिव एवैको ध्येय' इत्यादिश्रुतेः । शिखरिणीवृत्तमिदम् । तथा च पैंगल सूत्रम् 'शिखरिणी य्मौ न्सौ भ्लौ गुतुरुद्राःइति । प्रतिपादं यगणः । ⏑––, मगणः –––, नगणः ।।।, सगणः ।। –, भगणः –।।, लघुर्गुरुश्च षड्भिरेकादशभिश्च पादे यतिरित्येतत्सप्तदशाक्षरमत्यष्टिछंदोरूप समवृत्तं शिखरिणीसंज्ञकं भवति इत्यर्थः । तदुक्तं वृत्तरत्नाकरे 'रसै रुद्रैश्छिन्ना यमनसभलागःशिखरिणी' इति लक्षणमेतत् ॥

## ॐ महेश्वराय नमः ।

तवेश्वरत्वं त्रिजगद्विलक्षणं त्वमीश्वराणां महतामपीश्वरः ॥
जगत्तिरोधानकरः श्रुतीरितस्त्वं पंचविध्नोऽपि परो महेश्वरः ॥ २ ॥

**तवेश्वरत्वमि ति**। ईश ऐश्वर्य इतिधातोःकर्तरिस्थेशभासेत्यादिना वरच्प्रत्यये ईश्वर इति रूपं महा-श्चासावीश्वरश्चेति कर्मधारयः । ईशितृत्वं महत्वं च प्रवर्तनीयेष्वखिललोकप्रवर्तकत्वलक्षणं जगद्वै-लक्षण्यमेषु जघन्यस्य गुणस्य पूजने केनापि प्रवर्तयितुमशक्येऽप्यन्यादरेणाखिललोकप्रवर्तनात् ।

स्थितम्’ इत्यादिश्रुतेः । ‘अत्र च गुणगुणिनोरभेदादानंदविशिष्टार्थप्रतिपादनेऽप्यासां श्रुतीनां प्रामाण्यमवगंतव्यम् । अथवा शं सन्सुखरूपः सन्भवति सत्ताश्रय इति शंभुः। भूसत्तायामितिधातोः सुखसत्तास्वरूप इत्यर्थः । ‘सत्यं ज्ञानमनंतं ब्रह्म नित्यं विज्ञानमानंदं ब्रह्म’इत्यादिश्रुतेः । देवदारुविपिने दारुकावने लिंग इति दारुकावनान्तरे विराजमानं यल्लिंगं तत्र शंभ्वीश्वर इति प्रसिद्धो भवसीत्यर्थः । ‘देवदारुवने शंभुम्’ । इतिपुराणात्। अत उपदर्शितार्थप्रतिपादकत्वात्क्षेत्रविशेष प्रसिद्धत्वाच्च शंभुपदप्रतिपाद्यो भवसीत्यर्थः। इदं च श्रुति प्रसिद्धं नाम ‘नमः शंभवे च मयोभवे च’ ‘सर्वेश्वरः शंभुराकाश मध्ये’ इतिश्रुतेः । उपगीतास्यंवृत्तमिदम् । तथाच पैंगलसूत्रम् ‘अंत्येनोपगीतिः’ आर्याद्वितीयार्धलक्षणकमर्धद्वयं यत्र सोपगीतिरित्यर्थः । लक्षणं वृत्तरत्नाकरे‘आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ।। यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रुवते’ इति ।। ३ ।।

## ॐ पिनाकिने नमः ।

नाकोऽपि येन पिहितो मुनिकण्वमूर्धवल्मीकवेणुजधनुस्त्रितयाग्रजन्मा ।।
यः सप्तशीर्षफणिरूप उदारकर्मा चापस्तमाहवसि नाथ ततः पिनाकी ।। ४ ।।

**नाकोऽपीति** त्रिपुरदहनावसरप्रयुक्तशरानलज्वालया पिहित आच्छादितो नाकः स्वर्गो येनेति पिनाकं तदस्यास्तीति, पिनाकी पृषोदरादित्वात्साधुः । प्रशंसायां मत्वर्थीय इति । प्रशंसा च ‘नमस्ते अस्तु धन्वने’ ‘अवतत्य धनुस्त्वं’ ‘याते हेतिर्मिढुष्टम’ इत्यादिश्रुतिप्रसिद्धा। नाकोऽपि येन पिहित इत्येतच्छब्दार्थमाह मुनिकण्वेत्यादिना यः सप्तशीर्षेत्यादिना वाक्यद्वयेन। कण्वस्य महामुनेर्योऽयं मूर्धा उत्तमांगं तत्र संजातो यो वल्मीकस्तत्संभूतवेणुप्रकृतिकं यद्धनुस्त्रितयं पिनाकशार्ङ्गगांडीवाख्यं चापत्रय तत्राग्रजन्मा प्रथमोत्पन्न इत्यर्थः । तथाचोक्तमुमामहेश्वरसंवादे ‘युगान्तरे महादेवि कण्वो नाम महामुनिः।। स हि दिव्यं तपश्चर्यं कर्तुमेवोपचक्रमे’इत्यादिना । ‘पिनाकं नाम मे चापः शार्ङ्गं नाम हरेर्धनुः ।। तृतीयमवशेषेण गांडीवमभवद्धनुः ।। स च सोमाय निर्दिश्य ब्रह्मलोकगतं पुनः’ इति किंच सप्त शीर्षाणि सप्त शिरांसि फणारूपाणि यस्येति तथा तदुक्तं महाभारते उपमन्यूपाख्याने ‘इंद्रायुधसहस्राभं धनुस्तस्य महात्मनः ।। पिनाकमिति विख्यातं स च वै पन्नगो महान् । सप्तशीर्षो महाकायस्तीक्ष्णदंष्ट्रो विषोल्बणः । ज्यावेष्टितमहाग्रीवः स्थितः पुरुषविग्रहः । शरश्च सूर्यसंकाशो दृष्टः पाशुपताह्वयः ।-येन च त्रिपुरं दग्धं सर्वदेवमयः शरः’ इति। अत एवोदारकर्मा । तदुक्तं लैंगे ‘सोमश्च भगवान्विष्णुः कालाग्निर्वायुरेव च । शरे व्यवस्थिताः सर्वे देवमूचुः प्रणम्य तम् । दग्धमप्यथदेवेश शरं मोक्तुमिहार्हसि। अथ संसृज्य धनुषि ज्यां हरस्त्रिपुरार्दनः। मुमोच बाणं विप्रेन्द्र विकृष्याकर्णमीश्वरः। तत्क्षणात्तत्पुनर्दग्धं त्रिपुरं तच्छरार्चिषा’इतिस्पष्टमन्यत् । इदं श्रुतिप्रसिद्धं नाम ‘प्राणेश्वरः कृत्तिवासाः पिनाकी’ इति। वसंततिलकावृत्तमिदं तथा च पैंगलसूत्रं ‘वसंततिलका त्भौ जौ गौ’ प्रतिपादं तगणः ——॒, भगणः —॒॒ ।।जगणः ॒—॒ द्वयं गुरुद्वयं ——, चेति चतुर्दशाक्षरं शक्करीछन्दोरूपमेतद्वृत्तं वसंततिलकाख्यं भवतीत्यर्थः। लक्षणन्तु वृत्तरत्नाकरे ‘उक्ता वसंततिलकातभजाजगौगः’ इति लक्षणात् ।। ४ ।।

## ॐ शशिशेखराय नमः ।

मतिमयोऽखिलजीवसमष्टिरप्यमथिदक्षमखे हिमगुर्वृथा ॥
इति धिया दयया विधृतस्त्वया शिरसि तेन भवान्शशिशेखरः ॥ ५ ॥

**मतिमय** इति । शशी चन्द्रः स एव शेखरः शिरोभूषणं यस्येति तथा अयंच चन्द्रः न परिदृश्यमानः प्राकृतः किंतु मतिमयो ज्ञानस्वरूप इत्यर्थः । तथाचोक्तं शिवपुराणे 'ज्ञानंचन्द्रकलाचूडं दशदिग्बाहुमंडलम्' इति । तथा वराहपुराणेऽपि 'जटास्वरूपेण समस्तसागराः कुलानलाः सिन्धुवहाश्च सर्वशः ॥ शशी परिज्ञानमिदं तव स्थितं न देव पश्यन्ति कुदृष्टयो जनाः'इति । तथा अखिलजीवसमष्टिः सर्वेषां प्राणिनामैकात्म्यापन्नः । तथा सोमस्य वराहपुराणे प्रजापालनसत्यतप संवादे प्रपंचितं 'तस्मिंस्तु मथितो जातो पुनः सोममहीयत ॥ योऽसौ क्षेत्रज्ञसंज्ञो वै देहेऽस्मिन्पुरुषः परः। स एव सोमो मन्तव्यो देहिनां जीवसंज्ञितः'इति। हिमगुरिति हिमशब्दः शीतलवचनः 'तुषारः शीतलः शीतो हिमः' इत्यमरः। गोशब्दः किरणपरः।हिमाः शीतलाः गावः किरणा यस्येति हिमगुः । शीतकिरण इत्यर्थः । एवंभूतश्चन्द्रः अनपराधोऽपि संभ्रमवशाद्दक्षे-न वीरभद्रावतारेणेतरैरपराधिभिस्सह दक्षाध्वरे अमाथि माथितः शिक्षित इति यावत् । ततस्त्वनपराधिनि शशिनि कृतदयार्द्रचित्तेन शिवेन तद्दोषोपशमाय शिरसा पुनर्धृत इत्यर्थः । तथाचोक्तमानुशासनिके उमामहेश्वरसंवादे 'सोमस्तत्र मया देवि कंपितेन भयार्दितः ॥ पश्यंश्चानपराधी सन्पादांगुष्ठेन ताडितः ॥ तथा विनिकृतेनाहं सामपूर्वं प्रसादितः ॥ तन्मे चिन्तयतश्चासीत्पश्चात्तापः पुरा प्रिये ॥ तदाप्रभृति सोमं हि शिरसा धारयाम्यहम्। एवं वै पापहानिस्तु भवेदिति मतिर्मम'इति। इदं चानपराधिपीडनमत्यंतपापावहमिति लोकशिक्षणम् । द्रुतविलंबिताख्यं वृत्तमिदम् । तथाच पैंगलसूत्रं 'द्रुतविलंबितं नभौ भ्रौ' प्रतिपादं नगणो भगणद्वयं रगणश्चैतद्वृत्तं द्रुतविलंबिताख्यं भवतीत्यर्थः । लक्ष्यं च केदारे 'द्रुतविलंबितमाह नभौ भरौ' इति ।

## ॐ वामदेवाय नमः ।

वामार्धेन क्रीडसि त्वं त्रिलोकीवक्राचारो वल्गुमोदोऽसि तस्मात् ॥
विश्वोत्तीर्णः स्रष्टृतामप्यतीतः प्रेयानात्मा कथ्यते वामदेवः ॥ ६ ॥

अत्र वामेन वामार्धेन वामार्धाभिमानिन्या पराशक्त्येति यावत् । दीव्यतीति देवः क्रीडाशाली दिवुक्रीडादाविति धातोः सृष्टिस्थित्युपसंहारादिरूपविविधप्रपंचकार्यकर्तेत्यर्थः।तथाच'स्वतंत्रःकर्ता'इत्यागमप्रमाणसिद्धजगत्कर्तृत्वव्यपदेशस्य परमशिववृत्तेस्तत्तनमपि पराशक्तिसवलनप्रयुक्तत्वेन।स्वयं न किंचिदपि कार्यं करोतीति भाव।'न तस्य कार्यं करणं च विद्यते न न्यूनतश्चाप्याधिकश्च विद्यते॥परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इतिश्रुते।'लिप्यते न स पापेभ्यः पद्मपत्रमिवाम्भसा' इतिश्रुतेः 'शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्' इत्याद्यभियुक्तोक्तेश्चेति।शक्तेः सकलकार्यनिर्वाहक

त्वस्य परमशिवस्य पृथग्भावस्य तदौदासीन्यस्य च दर्शितत्वात्। तेन सप्तृतामप्यतीत इत्यर्थः सूचितः अथवा वामो वक्रो लोकविरुद्धकपालक्ष्वेलपैशाचदैगंबरादिविलक्षणाचरणवान्सचासौ देव इति कर्मधारयः दीव्यतिरस्मिन्पक्षे व्यवहारार्थकः।लोके हीप्सलिप्सयानिष्टपरिजिहीर्षया वा मंगलादिकं निषेव्यते। परमशिवस्य चेष्टानिष्टात्मकार्यकारणसंघातरूपप्रपंचसंसर्गिकत्वेना चेन्त्यापरिमितमहिमाधारत्वात्स्वछन्दचारीत्यर्थः । तेन विश्वोत्तीर्ण इत्येतत्प्रदर्शितम् । अथवा वामः सुंदरः 'मंगलायतनं देवं युवानमतिसुंदरम्' इत्यागमोक्तेः । सचासौ देवो मुदित इति यावत् । दीव्यतेर्मोदार्थकत्वात् । तथा वाक्त्रिमातिशायितपरमप्रेमास्पद इत्यर्थः । 'न वा अरे सर्वस्य कामाय प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति' इति श्रुतेः । तेन प्रेयानात्मेत्यर्थः सूचित इत्याशयेनाह **वामार्धेनेत्यादि** । त्रिलोकीवक्राचारः त्रयाणां लोकानां समाहारः त्रिलोकी तद्वक्रस्तद्विरुद्ध आचार आचरणं यस्येति तथा वल्गुमोदः वल्गुः सुंदरो मोद आनंदो यस्येत्यर्थः । **तस्मादिति** । उपदर्शितत्रितयहेतोरित्यर्थः । एतस्य विश्वोत्तीर्ण इत्यादिष्वन्वयः । तथा च वामार्धेन क्रीडनात्सप्तृतामप्यतीतः त्रिलोकीवक्राचरणाद्विश्वोत्तीर्णः मनोहरानन्दवत्वात्प्रेयानात्मेति व्युत्क्रमेण यथायोग्यमन्वयः । यद्यपि वामश्चासौ देव इति समासे सौंदर्यस्य देवपदप्रतिपाद्ये आनंदवत्येवान्वयः। वल्गुमोदोऽसि । ततस्तस्मादिति । तन्निर्वचनेन विशेषणीभूतानन्द एवान्वय इति परस्परविरोधिव्याख्यानद्वयोरेकार्थकत्वस्य व्युत्तिबललभ्यत्वात् । तथापि 'विशिष्टेऽन्वितस्यासति बाधके विशेषणेऽप्यन्वय' इति न्यायात्सौन्दर्यस्य मोदविशेषणत्वेनाप्यन्वयसंभवादविरोध इति । इदं श्रुतिप्रसिद्धं नाम 'वामदेवाय नमो ज्येष्ठाय नम' इति । शालिनीसंज्ञकं वृत्तमिदं तथा पैंगलसूत्रं 'शालिनी म्तौत्गौग समुद्रर्षयः' प्रतिपादं मगणः, तगणद्वयं, गुरुद्वयं च, चतुर्भिः सप्तभिश्च यतिरित्येतद्वृत्तं शालिन्याख्यं भवतीत्यर्थः । लक्ष्यं तु केदारे 'शालिन्युक्ता म्तौतगौगोऽब्धिलोकौ' इतितल्लक्षणात् ॥ ६ ॥

## ॐ विरूपाक्षाय नमः ।

विषमाणि विविधशक्तीन्यक्षीणि विलक्षणानि चाक्षाणि ॥
हरदेमकूटशैले लिंगे व्यक्तोऽस्यतो विरूपाक्षः ॥ ६ ॥

**विषमाणीति** । विरूपाणि विषमाणि लोचनानि अक्षीणि यस्य स विरूपाक्षः सोमसूर्याग्निलोचन इत्यर्थः । अथवा विरूपाणि इच्छाज्ञानक्रियात्मकत्वेन विविधशक्तीन्यक्षीणि यस्येति पूर्ववत् । इच्छाज्ञानक्रियात्मकलोचनत्रयवानित्यर्थः । तथाचोक्तं शैवागमे 'इच्छाज्ञानक्रियारूपविलसल्लोचनत्रयम्' इति । अथवा विरूपाणि विलक्षणान्यक्षाणि इंद्रियाणि यस्य स तथा इन्द्रियपदं त्वगादिधातूनामप्युपलक्षणं लोके ह्याहंकारिकाणि भौतिकानि वेंद्रियाणि भौतिकास्त्वगाद्या धातवः प्रसिद्धा। नैतादृशास्त्वगाद्या धातवश्चक्षुरादीनि चेन्द्रियाणि परमशिवस्य संभवंति । 'निष्क्रियं निष्कलं शान्तं निरवद्यं निरंजनम् । अपाणिपादमश्रोत्रम्' इत्यादि श्रुतेः । किन्तु उपासकैर्ध्यानार्थं परिकल्पितान्यप्राकृतानि इन्द्रियाणि तथैव त्वगाद्या धातव इत्यर्थः

धृतगीतिघनीभूतसच्चिदानंदविग्रहम् ’
तदुक्तं शिवपुराणे ‘ अप्राकृतशरीरं तमतिमन्मथरूपिणम् ॥ प्रतिबिंबमिवाकाशे
इति । अथान्यत्रापि शैवागमे ‘ नास्ति देहेऽस्थिरुधिरं न मांसं वापि किंचन ॥ चतुर्विंशत्युत्तरं
शक्रचापमिवांबरे ॥ ज्योतिर्मयतया सिद्धमिदं सादाशिवं वपुः ’ इति । कामिकेऽपि ‘ सप्तकोटिमहामन्त्रैर्मूलावेद्या-
यद्भुवनानां शतद्वयम् ॥ भुवनाध्वा स संचिन्त्यो देवदेवस्य शूलिनः ॥ पदसंहतिः॥
समुद्भवैः ॥ मंत्राध्वा रुधिरात्मासौ विचिन्त्यः पार्वतीपतिः ॥ अनेकभेदसंभिन्ना मंत्राणां उक्ता-
पदाध्वासौ पशुपते. शिरामांसतया स्थितः ॥ पृथिव्यादीनि षड्त्रिंशत्तत्त्वान्यागमवेदिभिः ॥ कामिकाद्य-
न्यमीभिस्तत्वानि शुक्रमज्जास्थिरूपधृक् ’ इति । एवं परमशिवस्य पंचाननैरुद्गतानि यानि
द्वाविंशत्यागमात्मकानि प्रमाणानि तदात्मकत्वेनापि ध्यातव्यं रूपमुक्तं तत्रैव प्रदेशान्तरे यथा
‘ कामिकं पादकमलं योगजं गुल्फयोर्युगम् ॥ चिन्त्यं पादाङ्गुलीरूपं कारणं प्रसृतिद्वयम् ॥
अजिता जानुनोर्युग्मं दीप्तमूरुद्वयं विभोः ॥ गुह्यं बीजात्मकं सूक्ष्मं सहस्रं तु कटि-
द्वयम् ॥ पृष्ठभागोंऽशुमानस्य नाभिः श्रीसुप्रभेदकम् ॥ विजयं जठरं प्राहुर्निश्वासं हृदयात्म-
कम्॥ स्वायंभुवं स्तनद्वंद्वमनलं लोचनत्रयम्॥ नीरामः कण्ठदेशोऽथ रुरुतंत्रं श्रुतिद्वयम्॥मुकुटं मुकुटं
नेत्रबाहवो विमलागमा. ॥ चन्द्रज्ञानमुरः शंभोर्बिंबं वदनपंकजम् ॥ जिव्हा प्रोद्गीतमीशस्य ललितं
गंडयोर्युगम् ॥ सिद्धं ललाटफलकं संतानं कुंडलद्वयम् ॥ यज्ञोपवीतं सर्पोक्तं हारस्रक् पारमेश्वरम् ॥
किरणं रत्नभूषास्य वातुलं वसनात्मकम् ॥ एवं तत्रात्मकं रूपमीश्वरस्य विचिन्तयेत् ’ इति ।
हर हेमकूटशैल इति । हरेति संबुद्धिः हेमकूटमिति क्षेत्रविशेषः ‘ हेमकूटे विरूपाक्षम् ’ इति
पाद्मे । अत इति उपदर्शितहेतोः विरूपाक्ष इति प्रसिद्धो भवसीत्यर्थः इदं च श्रुतिप्रसिद्धं नाम
‘ ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नम ’ इति । गीत्याख्य वृत्तमिदम् । तथाच पैंगलसूत्रम्
‘आर्यार्धसमा गीतिः ’ आर्यापूर्वार्धलक्षणकमर्धद्वयं यत्र तद्गीत्याख्यं वृत्त भवतीत्यर्थः । तदुक्तं वृत्तर-
त्नाकरे ‘ आर्याप्रथमपदलोक्त यदि कथमपि लक्षणं भवेदुभयोः ॥ दलयोः कृतयतिशोभा तां गीतिं
गीतवान्भुजंगेशः’ इति ॥

## ॐ कपर्दिने नमः ।

नदीपूरैः शोधादथ सुरधुनीशोधनात्तत्प्रदानात्कचग्रंथिर्भेदोऽतिशयित गुणः स्यात्कपर्दो वराटः॥
तदाधारः पूरस्थगनमपि तत्पावनं तत्प्रकाशक्षमत्वं मरालीं प्रथयसि तनुं छालगण्डे कपर्दी ॥८॥

नदीपूरैरिति पुरपूर्तावित्यस्माद्धातोः सम्पदादित्वाद्भावे क्विपि ‘राल्लोप’ इति विलोपे पूरशब्दो
रेफान्तः पूर्तिवाची अन्तर्भावितण्यर्थात्तत एव धातोः कर्तरि वा क्विपि पूरपर्यायः परशब्दः । कशब्दो
जलवाची ‘ मारुते वेधसि बध्ने पुंसि कः कं शिरोऽम्बुनोः ’ इत्यमरः । कस्य पर् कपर् जलप्रवाहः ।
स च गांगो विवक्षित. । तेन दायति शुध्यतीत्यर्थे ‘ दैपशोधने ’ इतिधातोः सुपि स्थ ’ इत्यत्र-
सुपीतियोगविभागात् सुप्युपपदे ‘ आतोधातो. कप्रत्ययो भवतीति’ कर्तरि कप्रत्यये–कपर्द इति रूपसि
द्धिरित्यभिप्रायेणाह । नदीपूरैः शोधादिति । शोधश्चायं नैर्मल्योन्माने न तु पावित्र्यं ‘ स्वतः
पवित्रं परमेशतत्वम् ’ इत्यभियुक्तोक्तेरन्यप्रयुक्तपावित्र्यानपेक्षणात् । तथाचोक्तं रामायणे ‘ पपात जा-
न्हवी पुण्या पुण्ये रुद्रस्य मूर्धनि ’ अथवा कपरं गंगाप्रवाहं दायति शोधयति पवित्रीकरोतीत्यर्थे
अंतर्भावितण्यर्थात्क्विप् कर्मण्युपपदे ‘ आतोनुपसर्गे कः ’ इत्यादि पूर्ववत् । तथाचोक्तं रामायणे
‘ भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ’ इति परिकरालंकारेण हेत्वाभिप्रायकं तोपविशेषणमने-

त्यभिप्रेत्याह अथ सुरधुनीशोधनादीति । अथवा कपर्दं गंगाप्रवाहं ददाति भगीरथायेति तथेत्याशयेनाह तत्प्रदानादिति । अथवा कपर्दो जटानां ग्रन्थिविशेषः । 'कपर्दोऽस्य जटाजूट' इत्यमरकोशादित्यभिप्रायेणाह कचग्रन्थेर्भेद इति । यद्वा कपर्दशब्दो गुणविशेषपरः । कपर्द इत्यधिकृत्य 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने' इतिसूतसंहितटीकाकारोक्तकोशवचनादित्याशयेनाह 'आतिशायितगुणः स्यादिति अचिन्त्यापरिमितानंदसंधायिगुणविशेषो वा कपर्दपदार्थ इत्यर्थः । अथवा कपर्दो वराट इति तदाधार इति योगेन रूढ्या वा कपर्दिन्व्युत्पत्तीना यथासंभवं क्रमेण प्रयोजनान्याह पुरस्थगनामित्यादिना । अत्र कपरा जलप्रवाहेण दायति शुद्धतीति प्रथमव्याख्याने तावानपि जलप्रवाहः प्रोंछनवस्त्रानुषंगिवारिवच्छुद्धिमात्रफलकत्वेन कथंचित्किंचिदपि भूमौ विनिपातेन पर्यवसानात् । गंगातीरभावलक्षणमहिमोक्त्या पुरस्य गंगाप्रवाहस्य स्थगनं स्थिरीभावं प्रथयसि प्रकटीकरोषि इत्युत्तरेण संबन्धः। कपर्दं गंगाप्रवाहं दायति शोधयति इतिद्वितीयव्याख्यानं च 'एवंविधे कलियुगे दोषाणामेकशोधनम् ॥ महादेवनमस्कारो ध्यानं दानमिति श्रुतिः' इतिकौर्मोक्त्या 'अपवित्रः पवित्रो वा सर्वावस्थांगतोऽपि वा ॥ यः स्मरेद्देवमीशानं स बाह्याभ्यंतरः शुचिः' इतिशिवधर्मवचनात्परमशिवस्य सर्वातिशयपावनोक्त्या 'श्रुताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता ॥ गंगा तारयते नृणामुभौ वंशौ विशेषतः' इत्यानुशासनिकवचनप्रतिपन्नं यद्गंगापावित्र्यं तदपि प्रथयसि त्वमेवेत्यर्थः । 'भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः' इत्युपदर्शितप्रमाणबलात्तावतोऽपि गंगापावित्र्यस्य भगवतः परमशिवस्य जटास्पर्श एव कारणमिति भावः । अतएव 'जटास्वरूपेण समस्तसागराः कुलाचलाः सिंधुवहाश्च सर्वतः' इत्यादिना सिंधुवहादीनां महानदीनां जटाश्रयत्वोक्तिरपि संगच्छते इति । कपर्दं गंगाप्रवाहं ददातीतितृतीयव्याख्याने अविद्यमानस्यार्थस्य दानकर्मत्वासंभवेन दूर्वामावलंब्यंबुकणिकारूपेण तिरोभावितस्य गंगाप्रवाहस्य योऽयं प्रकाशः प्रकटीकरणं तत्क्षमत्वं तत्सामर्थ्यं प्रथयसीत्यर्थः । कपर्दो वराट इति पंचमव्याख्याने परमशिवावतारस्य मैरालाख्यस्य या तनुर्मूर्तिः सा मैराली तादृशीं तनुं वा प्रथयसि करोषीत्यर्थः । तन्त्रचिंतामणौ मैरालाख्यस्य शिवावतारस्य कपर्दमालाधारणकथाया विस्तरेण स्मरणात् । छलगंडपदात्स्वार्थिकस्तद्धितश्छन्दस आनुगुण्याय कृतः । 'छालगंडे कपर्दिनम्' इति अष्टषष्टिक्षेत्राध्याये पद्मपुराणात् । श्रुतिप्रसिद्धं चेदं नाम 'नमः कपर्दिने च व्युप्तकेशाय च' इति श्रुतेः । मेघविस्फूर्जिताख्यं वृत्तमिदं तदुक्तं वृत्तरत्नाकरे 'रसर्त्वश्वैर्यम्नौ स्रौ ररगुरुयुता मेघविस्फूर्जितं स्यात्' अत्र प्रतिपादं यगणः मगणः नगणः सगणः रगणद्वयं गुरुश्चैकश्च षड्भिः षड्भिः सप्तभिश्च यतिरित्येतद्वृत्तं मेघविस्फूर्जिताख्यं भवतीत्यर्थः । अयं तु अतिधृतेर्भेदः ॥

## ॐ नीललोहिताय नमः ।

नेमांगनं प्रकृतिपूरुषं स्वैरन्तश्च रूपं युगपद्वपुस्तव ॥
येपोऽस्विकांबुकणतो ऽरुणासिताज्जातः शिव त्वमिति नीललोहितः ॥ ९ ॥

नेममर्धमंगना यस्य वपुषस्तादृशं तव शरीरमित्युक्त्या 'त्रयोदशं हरेरर्धमर्धनारी चतुर्दशम्' इतिवातुलशुद्धवचनप्रतिपन्नार्धनारीश्वरात्मकत्वेन नीललोहित इत्युक्तं भवति । तथाच श्रुतिः 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलम्' इति पिंगलं लोहितमित्यर्थः । वेदपादस्तवेऽपि 'अर्ध

पुंलक्षणं वंदे पुरुषं कृष्णपिंगलम् ’ इति प्रकृतिपुरुषात्मकत्वाद्वा तथेत्याह प्रकृतिपूरुषमिति प्रकृतिश्च पूरुषश्च तयोः समाहारः प्रकृतिपूरुषं परमशिवाश्रितायाः विद्यावरिकायाः प्रकृतेस्तमःप्रधानतया लोहित्यौचित्यात् । ब्रह्माण्डान्तर्वर्त्यशेषप्राणिराशिप्रवर्तकस्य च पुरुषस्य रजःप्रधानतया नीलत्वौचित्यादितिभावः । तथाचोक्तं लैंगे ‘नीलश्च लोहितश्चैव प्रधानपुरुषान्वयात्’ इति । भानुमंडलांतर्ध्येयस्वरूपत्वाद्वा तथेत्याह रवेरंतश्चेति च शब्दः इतीत्युत्तरत्र संबध्यते । ‘ इतिहेतुप्रकरणप्रकर्षादिसमाप्तिषु ’ इत्यमरः । सूर्यमंडलान्तर्वर्तित्वेन श्रूयमाणं यद्रूपद्वयं कंठावच्छेदेन नीलत्वं तदन्यावच्छेदेन लौहित्यं तद्वद्वपुर्मूर्तिस्तवेत्यर्थः । तथा च श्रुतिः ‘ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते । हिरण्यश्मश्रुः हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः’ । ‘असौ यो व सर्पति नीलग्रीवो विलोहित ’ इति च ’ । अर्धांगना शरीरत्वात्प्रधानपुरुषान्वयात् ॥ भानुमध्यपरामर्षादाविर्भावाच्च भावत ’ इतिहेतुचतुष्टयेनापि नीललोहितपदप्रतिपाद्यो भवसीत्यर्थः । आविर्भावादिति चरमहेतुं दर्शयति वेधसोऽलिकेत्यादि । वेधसो ब्रह्मणः यदलीकं ललाटं तद्भवो योऽयमंबुकणः स्वेदबिंदुस्तस्मादित्यर्थः । अरुणासिताल्लोहितनीलाज्जातः आविर्भूतः । तथा च सृज्यमानाया प्रजाया वृद्धिकामश्चतुर्मुखः पुत्रेच्छातः परमशिव एव पुत्रो मे भूयादित्यभिसंधायाग्नौ जुहाव जुह्वतस्तस्य ललाटात्समुद्गतः स्वेदबिंदुरग्नौ पतंल्लोहितो भूत्वा पुनर्नीलः सन्नुदतिष्ठत् । ततो भगवान्नीललोहितनामाविरभूदित्यादि अशेषेण प्रपंचितं शिवपुराणे यथा ‘ भूत्वा लोहितमाश्वेव पुनर्नीलमभूत्ततः ॥ नीललोहित इत्येव तेनाविरभवत्प्रभुः’ इति । तथा लैंगेऽपि ‘ वृद्ध्यर्थं भगवान्ब्रह्मा पुत्रैः स्वैर्मानसैः सह ॥ दुश्चरं विचचारैष समुद्दिश्य तपः स्वयम् ॥ तुष्टश्च तपसा तस्य भावं ज्ञात्वास्य वाञ्छितम् ॥ ललाटमभिनिर्भिद्य ब्रह्मणः पुरतः स तु ॥ पुत्रस्त्वहमिति प्रोच्य स्त्रीस्वरूपोऽभवत्तदा ॥ तस्य पुत्रो महादेवो ह्यर्धनारीश्वरोऽभवत् ’ इति । इदं च श्रुतिप्रसिद्धं नाम ‘द्रापे अंधसस्पते दरिद्रं नीललोहित ’ इतिश्रुतेः । ललिताख्यं वृत्तमिदं तदुक्तं वृत्तरत्नाकरे ‘ धीरैरभाणि ललिता तभौ जरौ ’ इति प्रतिपादं तगणः भगणः जगणः रगणश्चेति एतत्प्रतिपादयतिकं ललिताख्यं वृत्तं भवतीत्यर्थः अयं तु जगत्या भेदः ।

मूलश्लोक

शंकरः शूलपाणिश्च खट्वांगी विष्णुवल्लभः ॥
शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः ॥

एतान्यष्टौ नामानि निर्वक्ति ॥

## ॐ शंकराय नमः ।

कर एव सुखं धत्से भक्तानां कुरुषे च तत् ॥
पीठे चंद्रपुराभिख्ये नाम्ना ख्यातोऽसि शंकरः ॥ १० ॥

करोतीति करः । शं सुखं करे यस्येति शं करोतीति वा शंकरः । शमित्युपपदे कृञ्धातोरच्प्रत्ययादित्यभिप्रायेणाह कर एवेत्यादि । पीठ इति अष्टषष्टिपीठान्तः परिगणितं यच्चंद्रपुराख्यं पीठं तत्रत्यलिंगे शंकरत्वेन प्रसिद्धत्वाच्च शंकरशब्देन निर्वाच्यो भवसीत्यर्थः । स्पष्टमन्यत् । इदं च श्रुतिप्रसिद्धं नाम ‘ नमः शंकराय च मयस्कराय च ’ इति । पथ्यावक्त्राख्यं पुनमिदंतथाच पिंगलं सूत्रं ‘पथ्या युजो ज’ इति प्रतिपादं प्रथमाक्षरोत्तरं भयरसतजभनान्यतमो गुणो विषमपादे चतुर्थाक्षरायगण

तथैव समपादे चतुर्थाक्षराज्जगण एव पादांतिमाक्षरं गुर्वालघुर्वेत्येतद्वृत्तं पथ्याख्यं भवतीत्यर्थः । तथा च कैदारे 'युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम्'

## ॐ शूलपाणये नमः

शिव तृप्तपुरस्थलिंगमध्ये प्रकटस्संस्त्रिगुणात्मकाललोकैः ॥
शुचिभक्तिदशादिभिस्त्रिशूलं विदधंस्त्वं प्रथितोऽसि शूलपाणिः ॥ ११ ॥

शिवेति त्रिगुणेत्यादि । त्रिगुणाश्चात्मानश्च कालाश्च लोकाश्चेति तथा शुचयश्च भक्तयश्च दशाश्च आदिश्चेति च द्वंद्वः । शुचयोऽग्नयः । गुणाः सत्वादयः आत्मकाललोकशुचिभक्तिदशादिभिस्त्रिभिरिति त्रित्वस्योत्तरत्रापि संबंधः । तथाच सत्त्वरजतमोरूपगुणैः, आत्मातरात्मपरमात्माख्यैरात्मवर्गैः भूतभविष्यद्वर्तमानाख्यैः कालैः, स्वर्गमृत्युपातालाख्यैर्लोकैः, गार्हपत्याहवनीयदक्षिणाख्यैरग्निभिः, इच्छाज्ञानक्रियात्मिकाभिः शक्तिभिः, बाल्ययौवनवार्धक्याख्यैरवस्थाविशेषैः, जागृतस्वप्नसुषुप्तिभिर्वाऽवस्थाभिरादिपदग्राह्याभिः, सृष्टिस्थितिसंहृतिरूपकृत्यादिभिश्च परिकल्पितं यत्त्रिशूलं तद्धिधारणाच्छूलपाणिरिति प्रसिद्धो भवसीत्यर्थः । तथाचोक्तं पद्मपुराणे 'अथ यज्ञात्मको विष्णुस्त्रिशूलं मनसाकरोत् । गुणावस्थाग्निकालात्मलोकशक्तित्रयात्मकम्' इति । अत एव शैवागमादौ 'इच्छाज्ञानक्रियारूपास्त्रिशूले शक्तयो मताः' ॥ तथा 'त्रैगुण्यं शूलमेतस्य परशुः सत्यनिष्ठता' इति च । एवंभूतस्य त्रिशूलस्य करस्थत्वोक्त्या अनिर्वचनीयसामर्थ्याश्रयीभूताया अपि मायायाः स्वाधीनत्वमुक्तं भवति । शिवतृप्तपुरस्थलिंगमध्य इति । शिवेति संबुद्धिः । तृप्तपुरमिति क्षेत्रविशेषः । स्पष्टमन्यत् । इदं च श्रुतिप्रसिद्धं नाम 'तस्य ललाटाच्यक्षः शूलपाणिः पुरुषोऽजायत' इति । औपच्छन्दसिकाख्यं वृत्तमिदं तथा च पैंगलसूत्रे (?) औपछंदसिकं प्रतिपादं विषमपादयोः षण्मात्रोत्तरं रगणयगणौ समपादयोस्त्वष्टमात्रोत्तरं तावेव गणौ एतदौपछंदसिकाख्यं मात्रावृत्तं भवतीत्यर्थः । मात्रास्वपि केचन नियमा आकरे द्रष्टव्याः तथा च कैदारे 'पर्यंतयौ तथैव शेषमौपछंदसिकं सुधीभिरुक्तम्' इति ॥ ११ ॥

## ॐ खट्वांगिने नमः ।

द्रुहिणस्यैकं वदनं मिथ्यावचनं द्रुतं सद्यश्छिन्नं
न ततो वेधोमरणं शंभोः क्व पुनर्हिंसाजन्यं पापम् ॥
अथ दंडार्धं वहसि त्वं तज्जनशिक्षार्थं खट्वाया वा
चरणं यत्त्द्विमलं सत्त्वं प्रथितस्तेन त्वं खट्वांगी ॥ १२ ॥

द्रुहिणस्येति 'खट्वांगं दंडार्धम्' इत्यापस्तंबस्मृतेर्दंडार्धमेव खट्वांगपदार्थः । तच्च दंडस्यार्धमिति वा नरशिरःकपालप्रोतदंडविशेषो वा दंडार्धमित्यन्यदेतत् । तद्वहसि लोकशिक्षार्थं स्वीकरोषि खट्वांगीत्यर्थः । ननु ब्रह्मशिरोलवनप्रयुक्तपापहरणार्थमेवेदं खट्वांगमुररीक्रियताम् 'कपालपाणिः खट्वांगी ब्रह्मचारी सदोत्थितः ॥ पूर्णेद्वादशभिर्वर्षैर्ब्रह्महा प्रतिमुच्यत' इतिशांतिपर्वणि प्रायश्चित्तविधारणार्थत्वेन प्रतिपादितत्वात् । तत्किं जनशिक्षार्थमित्युक्तमत आह द्रुहिणस्येत्यादि द्रुहिणस्य ब्रह्मणो मिथ्यावचनं मिथ्यारूपं मृषावचनं यस्मिंस्तादृशमेकं वदनं सद्यस्तत्कालमेव छिन्नं

दर्शनस्योच्छेदहेतुत्वप्रति-
लूनं संहृतमिति यावत् । मिथ्यावचनं दृष्ट्वेत्यनेन मिथ्यावचनस्य 'अहिंसा परमो
पादनात्स्वस्य प्रागुपदर्शितसत्यसंधत्वमुक्तं भवति । ननु 'न हिंस्यात्सर्वभूतानि' प्राणिहिंसक-
धर्मः' 'न ब्राह्मणं हन्यात्' इत्यादिबहुतरप्रमाणपरिवर्जितब्रह्महननादिदोषप्रसक्त्या इत्यादिप्रमाणासिद्धप्रशांतत्वादि-
त्वादिरूपक्रौर्यादिधर्मधर्मितया 'त्रिलोचनं नीलकंठं प्रशांतम्' ब्रह्मशिरोलवनमात्रेण वेधोमरणं
स्वरूपधर्मविरोध इत्याशंक्याह तत इति । ततस्तावन्मात्रेण एकस्मिंश्छिरस्युच्छिन्नेऽ
नाभूदित्यर्थः । अत एव न हिंसाप्रयुक्तपापानुबन्धोऽपीत्याह क्व पुनरिति । स्वाभाविक-
प्यवशिष्टानामनपायात्कुतो हिंसाप्रसक्तिः कुतस्तज्जन्यपापं परमशिवस्य संभवतीत्यर्थः । तथाच प्रत्यवायरहितेनापि
ज्ञानबलक्रियत्वेन परमशिवस्येच्छामात्रशक्तिप्रधानत्वादिति भावः । परमशिवेनैवं प्रायश्चित्तमाचरितं यदि किमु वक्तव्यमल्पमतिमदाधुनिकजीवराशेरित्यापामरसाधारण-
लोकप्रायश्चित्तप्रवृत्तिदार्ढ्यार्थमित्यर्थः । प्राणवियोगाभावेऽपि द्रुहिणशिरोलवनमात्रेण
तद्धननविहितप्रायश्चित्ताचरणे प्रवृत्तिर्यदि किमु साक्षात्तद्वधकर्तुस्तदाचरणे वक्तव्यमित्यभि-
प्रायेणाह वहसीति वर्तमानार्थकलट्प्रत्ययेनाविशेषेण यावत्कालपरामर्शे सार्वकालीनं स्यात् । तद्वा-
राणस्य प्रयोजनाकांक्षायामेतस्यापि प्रयोजनत्वेनोपवर्णयितुमुचितत्वादिति भावः।तथाचोक्तं ब्रह्माण्डपु-
रणे 'यद्यप्यमुक्तप्राणोऽसि तथाप्येषोऽनघोऽपि सन् ॥ भिक्षाचरणमात्रेण प्रायश्चित्ती भविष्यति
एवंकृते न केनापि ब्रह्मद्रोहः कृतो भवेत् ॥ इत्युक्त्वासौ गणेशानो देवं देवोऽभ्यभाषत ॥ ब्राह्मणे
नावमंतव्यमितिलोकस्य कल्पये ॥ युवा भिक्षाटनं कर्तुं नियुक्तावनघौ मया' इति ।
अथवा खट्वाया मंचस्य अंगं पादः सोऽस्त्यायुधत्वेनेति खट्वांगी खट्वांगायुधवानित्यर्थः । तदुक्तं
कामिके सदाशिवप्रतिष्ठापटले 'पिंगलाभजटाजूटं दशदोर्दंडमंडितम् ॥ अभयं च प्रसादं च तथा
शक्तिं त्रिशूलकम् ॥ खट्वांगं दक्षभागस्थैर्वहंत करपल्लवैः ॥ भुजगं चाक्षमाला च डमरुं नील-
पंकजम् ॥ बीजापूरं च वामस्थैर्वहंत सुप्रसन्नकम्' इति । इदं खट्वांगं न प्राकृतमित्याह
विमलं सत्वमिति । शुद्धसत्वप्रवर्तकेच्छाज्ञानक्रियारूपशक्तित्रयात्मकमित्यर्थः । तदुक्तं शैवागमे
'इच्छाज्ञानक्रियारूपास्त्रिशूले शक्तयो मताः ॥ उक्तास्ता एव खट्वांगशुद्धसत्वप्रवर्तकाः' इति । एतेन
'महान् प्रभुर्वै पुरुषः सत्वस्यैव प्रवर्तकः' इतिश्रुतिसिद्धशुद्धसत्वप्रवर्तकत्वं सूचितम् । शुद्धसत्वस्व-
रूपं यत्खट्वांगं तद्वहसीति पूर्वेण संबंधः । तेनेति उपदर्शितरीत्या उक्तार्थप्रतिपादकत्वेन खट्वांगीति
प्रतिपाद्यो भवसीत्यर्थः । शंभुसंज्ञकं वृत्तमिदं तथाचोक्तमभियुक्तैः 'दशबाणर्षियतिधारी स्तोभयमा-
मोगंगः शंभुः प्रोक्तः' इति । प्रतिपादं सगणः तगणः यगणः भगणः मगणद्वयं गुरुश्च दशभिः पंचभि-
श्चतुर्भिश्च यतिरित्येतद्वृत्तं शंभुसंज्ञकं भवतीत्यर्थः । 'नवबाणाक्षैर्यतिधारी' इत्यपि पाठान्तरम् । तच्चो-
दाहरणान्तरविषयमन्वेष्टम् ॥ अतिधृतेर्भेदोऽयम् ॥

## ॐ विष्णुवल्लभाय नमः ।

वितरन्हरये तपस्यते पदरेखाजनितं सुदर्शनम् ॥
वपुरर्धमपि प्रियाय ते प्रथितस्त्वं भुवि विष्णुवल्लभः ॥

विष्णुर्वल्लभः उपासकत्वेन प्रीतिविषयो यस्येत्यभिप्रेत्याह वितरन्निति जलंधरवधार्थं स्वपदांगु-
ष्ठरेखातः आविर्भूतं यत्सुदर्शनं तच्चिरकालात्तपस्यते उपासीनाय विष्णवे वितरन्ददानस्त्वं विष्णु-
प्रियो भवसीत्यर्थः । तथाचोक्तमन्यत्र 'चरणांगुष्ठरेखोत्थं जन्ममध्ये सुदर्शनम् ॥ प्रदाय विष्णवे शूलं
स्य जग्राह वैष्णवम्' इति शैवशूलं दत्वा वैष्णवं सुदर्शनं जग्राहेत्यर्थः । विष्णोरुपासकत्वं च
सौप्तिके पर्वणि अश्वत्थामानं प्रति परमशिवेनैव प्रदर्शितम् । 'सत्यशौचार्जवत्यागैस्तपसा नियमेन च
क्षान्त्या धृत्या च भक्त्या च कर्मणा मनसा गिरा ॥ यथावदहमाराध्यः कृष्णेन क्लिष्टकर्मणा ॥

तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ' इति ॥ अथवा विष्णोर्वल्लभः उपास्यत्वेन प्रिय इति तथेत्याशयेनाह वपुरर्धमपीति । ते तव प्रियाय त्वद्भजनैकपरायणाय अर्धवपुरपि वितरन्निति पूर्वेण संबंधः । वपुरपीत्यपिना भोगायतनसमष्ट्यात्मकत्वेन शरीरस्य परमप्रेमास्पदत्तया दातुमयोग्यस्यापि दाने किमन्यासामणिमादिसिद्धीनां दाने वक्तव्यमिति निसर्गसिद्धं पारमैश्वर्यमौदार्यमित्यर्थः सूचितः तथाच परप्रेमास्पदीभूत इत्यर्थस्तात्पर्यविषयीभूत इति द्रष्टव्यम् ॥ 'उमासहायं परमेश्वरं विभुम्,' इत्युपक्रम्य ' स एव विष्णुः स प्रमाणः स कालाग्निः' इत्यादिश्रुतेः । आवयोरंतरं नास्ति शब्दैरर्थैश्च गोपते ' इत्यादि श्रुतेश्च परस्पराभेदस्य स्पष्टीकृतत्वात् । ' त्रयोदशं हरेरर्धमर्धनारीचतुर्दशम् ॥ ' इत्यादिवातुलशुद्धवचनप्रतिपन्नार्धनारीश्वरहर्यर्धादिघटितपंचविंशतिमूर्तीनामपि परमशिवाभेदस्यान्यत्र प्रपंचितत्वात् । इति सर्वमवदातं वैतालीयाख्यं वृत्तमिदं तथाचोक्तं पैंगले ' वैतालीयं द्विस्वरा अयुक्पादे युग्वादे वसवोऽनेर्लः ' इति । अयुक्पादः विषमपादः युक्पादः समपादः द्विरिति वसव इत्यत्राप्यन्वेति स्वराः सप्त वसवः अष्टाविधिकारसूत्रान्मात्रा इत्यनुवर्तते तथाच विषमपादयोः चतुर्दश मात्राः । समपादयोः षोडश मात्राः पादचतुष्टयेऽप्यंते लघुरित्यन्वेति । रगणः लघुर्गुरुश्चेति अक्षरपंचकात्मिकाः अष्टौ मात्राः । अंते पादावसानवर्तिन्यः तथा च विषमपादयोः षण्मात्राः पूर्ववर्तिन्यः अन्याश्चांत्यवर्तिन्य इत्येतद्वैतालीयसंज्ञकं वृत्तं भवति । तथाच कैदारे ' षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरंतरः । नसमात्रपराश्रिताः कला वैतालीयं ते रलौ गुरुः' इत्येतन्मात्रासंज्ञकं वैतालीयाख्यं वृत्तं भवतीत्यर्थः ॥ १३ ॥

## ॐ शिपिविष्टाय नमः ।

पशवः परमात्मनि धीविरहाद्द्विपदोऽपि नराश्च सुराः शिपयः ॥
तदनुग्रहकृद्धृदयं प्रविशन्प्रथितोऽसि विभो शिपिविष्ट इति ॥ १४ ॥

पशव इति । शिपयः पशवः इत्यन्वयः । शिपयः शिपिपदवाच्याः पशवः इत्यर्थः । ' यज्ञो वै विष्णुः पशवः शिपिः' इतिश्रुतेः । ते पशवः किं परिदृश्यमानाः प्राकृतगवादिरूपाः नेत्याह द्विपदोऽपीत्यादि । द्विपादत्वोपलक्षिता ये नराः सुरा वा सर्वेऽपीत्यर्थः । ननु लोमवल्लांगूलवत्त्वस्य चतुष्पात्त्वस्य वा पशुपदप्रवृत्तिनिमित्तं तेषां कथं तथात्वमत आह परमात्मनीति । विषयत्वं सप्तम्यर्थः । तथाच परमात्मविषयकस्वरूपावगमाभावादज्ञानाश्रयत्वाविशेषेणोपदर्शितानामपि पशुपदप्रवृत्तिविषयत्वं संभवत्येवेति भावः तथाचोक्तं शारीरिके भगवत्पादैः ' पश्वादिभिश्चाविशेषात् ' इति तथा लैंगेऽपि ' देवादयः पिशाचांताः पशवः परिकीर्तिताः ॥ तेषां पतित्वात्सर्वेशो भवः पशुपतिः स्मृत ' इति । तदनुग्रहेति । तेषां शिपिपदप्रतिपाद्यानां यावन्नरसुरादिप्रपंचात्मकपशूनां योऽयमनुग्रहः कृपावलोकनविषयीकरणं तत्करोति इति तदनुग्रहकृत् । हृदयं प्रविशन् इति । अशेषप्राणिनां हृत्पुंडरीकं प्रविशन् ' तत्सृष्ट्वा तदेवानुप्राविशत् ' इति श्रुतेः तत्तत्प्राणिविशेषांतर्यामितयेति यावत् । वस्तुतस्तदीयमानसस्थाने विषयीभाव एव हृदयप्रवेशः । तथाचानाद्योपरतांतःकरणानामशेषजंतूनामप्यनुग्रहार्थं तत्तत्प्राणिविशेषांतःस्फुरितः संस्तथा प्रसिद्धो भवसीत्यर्थः । शिपिविष्ट इति शिपिविष्ट इतिनामव्युत्पत्तिः । श्रुतिप्रसिद्धं चेदं नाम ' नमो गिरिशाय च शिपिविष्टाय च' इति श्रुतेः ॥ तोटकाख्यं वृत्तमिदम् । तथा च पैंगलसूत्रे तोटकं सः ' इति प्रतिपादं चत्वारोऽपि सगणा यत्र भवंति तत्तोटकाख्यं वृत्तं भवतीत्यर्थः । तथैव केदारे लक्ष्यम् ' इह तोटकमंबुधिसैः कथितम् ' इति ॥ १४ ॥

## ॐ अंबिकानाथाय नमः ।

नाथासि हिमाचलसुतां मनसा तां नाथसेऽथ तन्नाथः ॥
प्रकटोऽसि देविकायां लिंगे तेनांबिकानाथ ॥ १५ ॥

अंबिकां नाथति याचते इति वा अंबिकाया नाथः पातिरिति वा । तथाचांबिकायाचकः अंबिके
च्छुरंबिकापतिरिति वा यथायथमर्थः । इत्याभिप्रेत्य परमाशिवाभिमुख्यं द्योतयन्नाह नाथसीत्या-
दि । हिमाचलं प्रत्युमां नाथसि याचसे अथवा मनसा ता नाथसे आशासे इत्यन्वयः नाथृनाधृ-
याञ्चोपतापैश्वर्याशीःष्विति पठितस्य धातोरनुदात्तेतो ह्याशिष्यर्थ एवात्मनेपदस्य 'आशिषिनाथ '
इतिसूत्रेण नियमात् । अतएव नाथृ इत्यात्मनेपदस्य धातोराशासनमेवार्थः । देविकेति । देवि-
काख्यक्षेत्रविशेषे विराजमानं यल्लिंगं तत्रांबिकानाथेश्वरत्वेन प्रकटः प्रसिद्धः इत्यतोऽप्यंबिकानाथ
पदप्रतिपाद्यो भवसीत्यर्थः । श्रुतिप्रसिद्धं चेदं नाम ' नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय
हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नम ' इति । आर्यावृत्तमिदं 'स्वरा अर्ध चार्यार्धम्'
इत्यादिसूत्राष्टकेनोक्तं एतल्लक्ष्म केदारे 'त्रिष्वंकेषु पादो दलयोराद्येषु दृश्यते यस्याः' ॥ पथ्येति ना-
म तस्याश्छन्दोविद्भिः समाख्यातम् ॥' इति । अस्मिन्वृत्ते पूर्वार्धे गुरुसहिताः सप्त गणाः तत्रापि षष्ठः
जगणो वा नगणः नतु अन्यः यरता गणा न संत्येव किंतु चतुर्मात्राभावात् । विगणेषु यतिरिति
पूर्वार्धं भवति । उत्तरार्धे तु सर्वं प्राग्वदेव षष्ठस्थाने लघुरिति पथ्यार्याख्यं वृत्तं भवतीत्यर्थ ॥१५॥

## ॐ श्रीकंठाय नमः

क्ष्वेलं गंगामिंदोर्लेखामाधोत्थां वा कांतिं कंठे ॥
विभ्रन्मांडल्येशे लिङ्गे विख्यातोऽसि त्वं श्रीकण्ठः॥ १६ ॥

विषानुलिप्तकंठवाञ्शोभोपरक्तकण्ठ-
अत्रच श्रीयुक्तः कण्ठो यस्येति मध्यमपदलोपिसमासे व्युत्पत्तिमनुसरति क्ष्वेलमित्यादि
वान्वेत्यर्थ इतिकेषांचिद्व्याख्यानं तत्स्पष्टत्वादुपेक्ष्य प्रकारान्तरेण । वाणीलक्ष्मीलवं-
श्रीशब्दः क्ष्वेडपरः तज्जन्यशोभापरश्च 'श्रीर्वेषरचनाशोभासंवत्सु रविशाखिषु । कमित्यव्ययस्य जलवाचितया
गेषु विषे बिल्वेऽप्यथ त्रिषु ।' इति नानार्थरत्नमालावचनात् । गांगमेव जलं कम् शब्दार्थः।ठशब्दश्चन्द्रवाची। 'बृहद्ध्वनौ
जलसामान्यलाभे प्रकृते च तद्विशेषविवक्षायां तथा च श्रीश्च कम्च ठश्चेति
च ठः प्रोक्तस्तथा चन्द्रस्य मण्डले' इति अनेकार्थध्वनिमंजर्युक्तेः । तेन श्रीकंठपदेन हालाहलं विषं
श्रीकंठाः ते चास्य संतीति श्रीकंठ इति द्वंद्वोत्तरं मत्वर्थीयाच्प्रत्ययः । कंठे
तज्जन्यकांतिं च कंठावच्छेदेन गांगजलं चान्द्रीं कलां च तदन्यदेशावच्छेदेन वहसीत्यर्थः । श्रीकंठे-
विभ्रदित्यत्र कंठदेशस्तदन्यदेशस्याप्युपलक्षकः। मांडल्येश इति मांडल्येशाख्ये क्षेत्रविशेषे तथा च पैंगलं
श्वरत्वेन प्रसिद्धत्वात् श्रीकंठपदप्रतिपाद्यो भवसीत्यर्थः । विद्युन्मालाख्यं वृत्तमिदं । तथा
सूत्रम् । 'विद्युन्माला मौ गौ' प्रतिपादं मगणद्वय गुरुद्वयं चेत्तद्वृत्तं विद्युन्मालाख्यं भवतीत्यर्थ. ।
च वृत्तरत्नाकरे लक्ष्यं । मो मो गो गो विद्युन्मालेत्यनुष्टुप्छंदोभेदोऽयम् ॥ १६ ॥

## ॐ भक्तवत्सलाय नमः

दासानुरस्यावपसीति तर्णकान् भक्तात्मकानोदन चाल्को भयम् ।
पोषाय गृह्णास्यथ तेषु सौहृदं पुष्णासि तस्मादसि भक्तवत्सलः ॥ १७ ॥

भक्तान् दासान् वत्से उरसि लानि गृह्णातीति भक्तवत्सलः 'उरो वत्सं च वक्षश्च' इत्यमरः अथवा
वत्सशब्दस्तर्णकपरः तथा च भक्ताश्च ते वत्साश्च तान् लाति तथा अथवा 'वत्सांसाभ्यां कामबले'
इति मत्वर्थेलच्प्रत्ययसमवधाने वत्सशब्दः कामवचनः । तद्वान् वत्सलः भक्तेषु वत्सलः प्रेमा-
तिशयशालीति तथेत्यभिप्रायेणाह दासानुरस्यावपसीत्यादि । आवपसि गृह्णासीत्यर्थः । तर्णकान्
शिशुविशेषान् ' सद्योजातस्तु तर्णक ' इत्यमरः पोषाय रक्षणार्थं तेषु भक्तेषु सौहृदं प्रेमातिशय
विशेष पुष्णासि पूरयसीत्यर्थः । इंद्रवंशाख्यं वृत्तमिदं ।तथा च पैंगलसूत्रं । 'इंद्रवंशा तौ जौ' प्रतिपादं
तगणद्वय जगणो रगणश्चेतद्वृत्तं इंद्रवंशाख्यं भवतीत्यर्थः ।तथाच केदारोक्तिः 'स्यादिंद्रवंशा ततजैर-
रजैः' इतिलक्षणात् ।

मूलश्लोकः

भवः शर्वस्त्रिलोकेशः शितिकंठः शिवाप्रियः ।
उग्रः कपाली कामारिरंधकासुरसूदनः ॥

एतानि नव नामानि निर्वक्ति.

## ॐ भवाय नमः

सत्तामात्रमधिष्ठानमुपादानमसि विश्वस्य ।
सलिलस्याधिष्ठात्री मूर्तिस्तव तेन विश्रुतोऽसि भवः ॥१८॥

भूधातोः सत्तार्थकात्कर्तरिपचाद्याचि भवत्यस्तीति भवः । सत्तामात्रस्वरूप इत्यर्थ इत्याभिप्रायेणाह सत्तामात्रमिति प्रपंचाधिष्ठानभूतसत्तामात्रस्वरूप इत्यर्थः । अस्तरेववेदं रूपं अस्त्यस्मिन् विश्वं इत्यधिकरणे अस्त्यस्माद्विश्वमित्यपादाने वाक्रूदोरविप्रत्यये अस्तेर्भूरिति भ्वादेशेच भव इति रूपसिद्धिः इत्यभिप्रायेणाह अधिष्ठानमुपादानमसीति चराचरात्माखिलप्रपंचजातस्य अधिष्ठानमाश्रयः उपादानं वृत्तिप्रयोजनकं चेत्यर्थः । 'यतोवा इमानि भूतानि जायंते । येन जातानि जीवन्ति । यत्प्रयंत्यभिसंविशंतीति यो योनिमधितिष्ठत्येको यस्मिन्निदं संचविचैति विश्वमूह्यत्यादिश्रुतेः अथवा अष्टमूर्तिसमष्ट्यात्मकपरमशिवाभिन्ना सलिलाधिष्ठात्री श्रीमूर्तिरेव वा भव इत्युच्यते । तदुक्तं लैंगे तद्यथा 'अष्टमूर्तिर्जगद्व्याप्य स्थितोऽयं परमेश्वरः ॥ चराचराणां भूतानां धाता विश्वंभरात्मकः ॥ भव इत्युच्यते देवैर्भगवान्वेदवादिभिः ' इति तथाचैकात्मिका नानात्मिका वा मूर्तिरेव भवपद्प्रतिपाद्येत्यभिप्रायेणाह सलिलस्येति तव मूर्तिः इत्यत्र ' राहोः शिरः ' इतिवद्भेदार्थकषष्ठ्या त्वदभिन्नाष्टमूर्तिर्भवपद्प्रतिपाद्येत्यर्थः । इदमुपलक्षणं भवंत्याविर्भवंत्यन्योन्यमस्माद्ब्रह्मादय इति वा भवः । परस्परं ब्रह्माविष्णुरुद्राणामुत्पादक इत्यर्थः । तथाचोक्तं शिवपुराणे वायुसंहितायां ' त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात् ' ॥ इत्युपक्रम्य 'तपसा तोषयित्वा तं पितरं परमेश्वरम् ॥ ब्रह्मनारायणौ पूर्वं रुद्रः कल्पांतरेऽसृजत् ॥ कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयौ ॥ विष्णुश्च भगवांस्तत्र ब्रह्माणमसृजत्पुनः ॥ नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ॥ एवं कल्पेषु सर्वेषु ब्रह्मविष्णुमहेश्वराः ॥ परस्परस्माज्जायन्ते परस्परजयैषिणः ॥' इत्यपि द्रष्टव्यम् । इदं च श्रुतिप्रसिद्धं नाम ॥ 'नमो भवाय च रुद्राय च' इति उद्गीत्याख्यं वृत्तमिदं तथा च पैंगलसूत्रं 'व्युत्क्रमेणोद्गीतिः' आर्यार्धद्वयलक्षणयोः पूर्वोत्तरवैपरीत्ये उद्गीतिसंज्ञकं भवतीत्यर्थः । तथाचोक्तं वृत्तरत्नाकरे ' आर्याशकलं द्वितयं व्यत्ययरचितं भवेद्यस्याः ॥ सोद्गीतिः किल गदिता तद्वद्यत्यशभेदसंयुक्ता ' इति ॥ १८ ॥

## ॐ शर्वाय नमः ।

यदेतदाभाति बहुप्रकारं जगत्तदंते सकलं शृणासि ॥
अधिष्ठितो मध्यमदेशलिंगे धरण्यधिष्ठातृतयापि शर्वः ॥ १९॥

यदिति शृणाति हिनस्त्यंतकाले सर्वमिति शर्वः 'कृगृशृद्रुभ्यो: वः' इत्यौणादिको वप्रत्यय इत्यभिप्रायेणाह यदेतत्परिदृश्यमानं वियदादिविविधविषयात्मकं जगत्तदंते प्रपंचोपसंहारकमहाप्रलयावसरे शृणासि उपसंहरसीत्यर्थः ' मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥ मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्' इति श्रुतेः । मध्यमदेश इति क्षेत्रविशेषः तत्रत्यलिंगे सर्वेश्वर इति प्रसिद्ध इत्यर्थः । धरण्यापि पृथिव्यभिमानिनीमूर्तिः शर्वपदार्थ इत्यर्थः । परमशिवाभिन्नाष्टमूर्तीनामंतः शर्वमूर्तेः पृथिव्यधिष्ठातृतया अन्यत्र प्रपंचितत्वात् । तदुक्तं शिवपुराणे ' ऊर्वी शर्वात्मिका मूर्तिरितिशास्त्रस्य निश्चयः' इति । इदं श्रुतिप्रसिद्धं नाम 'नमः शर्वाय च पशुपतये च' इति उपेंद्रवज्राख्यं वृत्तमिदं तथाच पैंगलसूत्रम् ' उपेंद्रवज्रा ज्तौ ज्गौ ग् ' प्रतिपादं जगणः, तगणः, जगणः, गुरुद्वयंचेतितद्वृत्तमुपेंद्रवज्राख्यं भवतीत्यर्थः । तथाच लक्ष्यं केदारे ' उपेन्द्रवज्रा जतजास्ततो गौ ' ॥१९॥

## ॐ त्रिलोकेशाय नमः ।

ऊर्ध्वाधोमध्यभुवाममरासुरमानवप्रकरनिविडानाम् ॥
अंतर्यमनात्त्रिपुटीसाक्षितया शंकर त्रिलोकीशस्त्वम् ॥ २० ॥

त्रयाणां लोकानां समाहारस्त्रिलोकी तस्या ईशस्त्रिलोकीशः तन्नियामकः तत्साक्षी चेत्याशयेनाह
ऊर्ध्वा इति। अत्र च भूशब्दो भुवनपरः ऊर्ध्वाचाधश्च मध्यं च तद्रूपाणि यानि भुवनानि तेषाममर-
राश्च मानवाश्च तेषां यः प्रकरः समूहः तेन निबिडानि संदृष्टानि यान्यूर्ध्वाधोमध्यभुवना-
नि स्वर्गपातालमर्त्याख्या लोकास्तेषामंतर्यमनादंतर्यामितया तत्कार्येषु प्रेरणादित्यर्थः एवंचात्र
यावद्विषयेष्वपि चराचरात्मकेषु प्रत्येकबुद्धिवैचित्र्यद्वारा सर्वानपि लोकान्स्वस्वकार्ये प्रवर्तयती-
त्युक्तं सर्वांतर्यामित्वलक्षणम्। त्रिलोकीशत्वमुक्तं भवति तथाच श्रुतिः 'एको देवः सर्वभूतेषु गूढः सर्व-
व्यापी सर्वभूतांतरात्मा एको जालवानीशत ईशानीभिः सर्वाल्लोकानीशत ईशानीभिः। एको हि
रुद्रो न द्वितीयाय तस्थुः य इमाल्लोकानीशत ईशनीभिः। प्रत्यङ्जनास्संचुकोचांतकाले संसृज्य
विश्वा भुवनानि गोप्तेति अथवा साक्षी चेता केवलो निर्गुणश्चेति श्रुतिप्रसिद्धं लोकसाक्षित्वमेव त्रिलो
कीशत्वमित्याह त्रिपुटीसाक्षितयेति। पुटशब्दोऽपि विषयपरः त्रयाणां पुटानां समाहारः त्रिपुटी स्वर्ग-
मृत्युपातालात्मकविविधप्रपंचाकारवृत्तिविशेषविषयसाक्षितया वा त्रिलोकीश इत्यर्थः। मूले च लोक-
पदं प्रथमव्याख्याने भुवनपरं 'लोकस्तु भुवने जने' इत्यमरः। द्वितीयव्याख्याने च लोक्यत इति कर्म-
व्युत्पत्त्या विषयपरमिति। त्रिलोकेश इति पाठे त्रिलोकेषु ईशः ईशनं यस्येति वा त्रयो लोकाः य-
स्मिन्स्वकर्मत्वादिसंबंधेन तादृशमीशनं यस्येति वा व्याख्येयम्। त्रयो लोकास्त्रिलोकास्तदीश
इति वा त्रित्वसहिता ये लोकास्तदीश इति वा व्याख्याने लक्षणमात्राधिक्येऽप्युभयोरपि कर्मधारय-
त्वाविशेषाद्दिक्संख्ये संज्ञायामितिनियमविरोध इत्यवगंतव्यम्। आर्यागीत्याख्यं वृत्तमिदं तथा च
पैंगलसूत्रम् ' अर्धे वसुगणा आर्यागीतिः' इति। स्वरार्धं चार्यार्धमित्यादि पूर्वोक्तलक्षितायाः आर्यायाः
अन्यतरस्मिन्नुभयस्मिन्वा अर्धे वसुगणा अष्टौ मात्रागणाः यत्र संति तदार्यागीतिसंज्ञकं वृत्तं भवती-
त्यर्थः। प्रकृते चार्धद्वयेऽपि अष्टौ मात्रागणा इति द्रष्टव्यम्। चतुर्मात्रात्मको मात्रागणः लघुरेकमात्रो
गुरुर्द्विमात्रादिकमाकरऽपिद्रष्टव्यं लक्ष्यं तु ' आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधनेयुक्तम् ॥ इतरं
तद्वन्निखिलं यदीयमर्धमुदितयमार्यागीति ॥ २० ॥

## ॐ शितिकंठाय नमः ।

दृषदाधिगलमिंद्रपाविमहातिभभवं कालम् ॥
कालंजरगिरिशिखरे प्रथितस्त्वं शितिकंठः ॥ २१ ॥

शितिर्नीलः कंठो यस्येति शितिकंठः। अत्र च हालाहलप्रयुक्तकालिम्नः श्रीकंठपदेनैव प्रदर्शितत्वात्प्रका
रांतरेण तत्प्राप्तिपर तया श्रीकंठपद व्याचष्टे दृषदिगलमित्यादि। इंद्रपाणीति इंद्रस्य देवेंद्रस्य

यः पविर्वज्रायुधं तत्प्रयुक्ता या प्रहृतिः प्रहारस्तज्जन्यो यः कालः नीलरूपं तस्य गलमध्ये विधारणाच्छितिकंठपदप्रतिपाद्यो भवसीत्यर्थः। तथाचोक्तं हरिवंशे पारिजातापहरणे कृष्णकृतबिल्वोदकेश्वरस्तवे 'दत्तः प्रहारः कुलशेन पूर्वं तवेशानापगज्ञातवीर्यम्॥ कंठे नेन्द्रं ते गते यत्प्रवृत्तं तस्मात्ख्यातस्त्वं नीलकंठोऽसि नाथः' इति, कालंजरगिरिरतिक्षेत्रविशेषः स्पष्टमन्यत् अर्धगीसंज्ञकं मात्रावृत्तमिदं तथाचोक्तमभियुक्तैरभिनववृत्तरत्नाकर 'तुरंगैमि स्त्रिभिरर्धगीति' तुरंगशब्दो हि चतुष्कलात्मकपरः। 'गजरथपदाति तुरगाश्चतुष्कला भवेन्नाम' तत्रैव विशदं परिभाषितत्वात्। तथा च प्रतिपादं चतुर्मात्रात्मकगणत्रयं यत्र तदर्धगी संज्ञकंवृत्तं भवतीत्यर्थः। २१।

# ॐ शिवाप्रियाय नमः।

मतिर्धृतिः कृतिर्बलं शरीरमिंद्रियं मनः॥
समस्तमेव ते शिवा भवानतः शिवाप्रियः॥ २२॥

शिवा चिच्छक्तिः प्रिया स्वात्माभिन्नत्वेन परमप्रेमास्पदीभूता यस्येति शिवाप्रियः। समस्तमेवेत्यनेनोक्तानुक्तात्मकः सर्वोऽपि प्रपंचः परमशिवाभिन्नपराशक्तिस्वरूपमेवेत्युक्तं भवति। तथाचोक्तमभियुक्तैः 'शरीरमधिदैवतमंतरात्मा ज्ञानक्रियाकारणमासनजालमिच्छा॥ ऐश्वर्यमावरणमायतनानि च त्वं किं तन्न यद्भवति देवि शशांकमौलेः' तथा 'शंभोर्ज्ञानक्रियेच्छाबलकरणमनःशांतितेजःशरीरस्वर्लोकाकारदिव्यासनवरमहिषीभोग्यधर्मस्वरूपा॥ सर्वैरेतैरुपेतः स्वयमपि च परब्रह्मणस्तस्य शक्तिः सर्वैश्वर्यैकभूमिर्मुनिभिरभिनुता वेदतंत्राभियुक्ता' इति। शेषमतिरोहितार्थम्। प्रमाणिकासंज्ञकं वृत्तमिदं 'प्रमाणिका जरौ लगौ' इतिपैंगलसूत्रात्प्रतिपादं जगणः रगणः लघुगुरुश्चेति॥ २२॥

# ॐ उग्राय नमः।

उच्यस्यंतर्निखिलजनानामुद्गच्छस्यप्यथ जगदूर्ध्वम्॥
प्रव्यक्तः सन्कनखललिंगे वायोरंतर्वससि तदुग्रः॥ २३॥

उचसमवाये इति धातोः उच्यति सर्वलोकांतः समवेतो भवतीति वा उत्पूर्वकाताद्गच्छतेरुद्गच्छति सर्वस्मादपि लोकाद् उर्ध्वं वर्तते विश्वातीर्णो भवतीति वा उग्र इत्यभिप्रायेणाह उच्यसीत्यादि। निखिलजनानामखिललोकानामुच्यसि समवेतोऽसि सर्वलोकांतर्व्यापक इत्यर्थः। उद्गच्छसि ऊर्ध्वं व्याप्नोषि अतएव कनखलाख्ये क्षेत्रविशेष उग्रेश्वरेण प्रव्यक्तोऽसि व्यष्टिसमष्ट्यात्मकप्रपंचमात्रव्यापित्वेन स्थूलाभावव्याप्तेः। अथवा वाय्वधिष्ठातृमूर्तिविशेषो वा उग्र इत्याह वायोरंतरिति शिवपुराणे 'स्पंदयन्पवनो विश्वं बिभर्ति स्पंदते च यत्॥ उग्र इत्युच्यते सद्भिर्मूर्ती रुद्रस्य वेधसः' इति। श्रुतिप्रसिद्धं चेदं नाम 'नम उग्राय च भीमाय च' इति। मत्ताख्यं वृत्तमिदं तथा च पैंगलसूत्रं 'मत्ता म्भौ स्गौ' प्रतिपादं मगणः भगणः सगणः गुरुश्चेत्येतद्वृत्तं मत्ताख्यं भवतीत्यर्थः। तथा चोक्तमभियुक्तैः। 'युक्ता मत्ता मभसगयुक्ता' इति॥ २३॥

## ॐ कपालिने नमः ।

कमलभवकरोटिव्रातमालाधरत्त्वात्तदधिकबलशाली भासि कंकालनाथः ॥
परशिव करवीरक्षेत्रमध्यस्थलिंगे निवससि सुवंश्यो नामतस्त्वं कपाली ॥ २४ ॥

कपालमस्यातीति कपाली तथा कपालव्यूहमालाधर इत्यनेनानेकब्रह्मांडदर्शित्वलक्षणं सदात-
नत्वं सूचितं तच्च समबलत्वविषमबलत्वाभ्यां बाधितं सदधिकत्र वरत्वे पर्यवस्यतीत्यत आह तद-
धिकेति तदपेक्षया कमलभवापेक्षया अधिकं बलमस्यास्तीति तथाचोक्तमन्यत्राभियुक्तैः ' कल्पांतरे
द्रुहिणकोटिकरोटिमालाभस्मांगराकमलांगवराहशृंगैः ॥ आकल्प एव तव मंगलविग्रहस्य लोकोत्तरं
किमु बलं शिव न व्यनक्तीति ' कंकालनाथ इति पंचविंशतिमूर्त्यंतर्गतो मूर्तिविशेषः तदुक्तं वातुल-
शुद्धे 'कंकालं षोडशं भवेत्' इति। करवीरक्षेत्र इति। करवीराख्ये क्षेत्रविशेषे कपालीश्वर इति नाम्ना
निवससीत्यर्थः । तथाच तादृशक्षेत्रे निवासयोगेन कपालमालाधारणाद्रूढ्या मूर्तिविशेषात्मकत्वाद्-
त्युभयथापि कपालीति भासीति प्रसिद्धो भवसीत्यर्थः । मालिन्याख्यं वृत्तमिदं तथाच पैंगलसूत्रं
' मालिनी नौम्यौयूचेति ' । प्रतिपादं नगणद्वयं मगणः यगणद्वयं चेत्येतद्वृत्तं मालिन्याख्यं भवती-
त्यर्थः । तथाच वृत्तरत्नाकरे ' ननमयययुतेयं मालिनी भोगिलोकैः ' इति । अष्टाक्षरे सप्तमाक्षरे
यतिरिति ॥ २४ ॥

## ॐ कामारये नमः ।

कर्पूरश्वेत त्वं कामेच्छोर्दूरे निष्कामानामासन्नः ॥
दर्पं कंदर्पस्य प्रक्षिपन्विख्यातोऽभूर्लोके कामारिः ॥ २५ ॥

कामः कामनासौ अरिःशत्रुर्यस्य यद्वासौ कामना विरोधिनी ॥ कामारिरित्याशयेनाह कामेच्छो-
र्दूर इत्यादि । कर्पूरश्वेत इति संबुद्धिः कर्पूरवत्पांडुवर्ण इत्यर्थः। कामः काम्यमानपदार्थसमूहस्तमिच्छती
तिकामेच्छुः सकामः कामनैकबद्धचित्त इति यावत् । तस्य दूरे विदूरवर्ती तथाच कामनारूपप्रती-
बंधग्रहग्रस्तत्वान्न कथंचिदपि परमशिवभावैक्यं प्राप्तुं शक्नोतीत्यर्थः । एतेन यद्वासौ कामना
विरोधिनी ॥ कामारिरितिपदव्युत्पत्तिः सूचिता । तामेव पुनर्व्यतिरेकमुखेनापि द्रढयति निष्का-
मानामिति निर्गता कामना एभ्यः फलविषयकप्रत्याशाशून्यानामित्यर्थः । आसन्नः प्रत्यासन्नस्त-
न्निकटवर्तीति यावत् । कामनारूपप्रतिबंधकनिरहान्निसर्गत एव परं परमशिवभावं प्राप्नोतीत्यर्थः ।
तथाचोक्तं शिवपुराणे ' फलोद्देशेन देवेशि लघुर्मयि समाश्रयः ॥ फलार्थी तदभावे मां परित्यक्तुं
क्षमो यत ' इति । तथा शिवगीतायामपि 'त्यक्त्वा पुत्रादिषु स्नेहं निष्कामी निष्परिग्रहः ॥यावज्जीवं
विरक्तः संल्लिंग एवार्चयेच्छिवम् ॥ एकेन जन्मना तस्य ददाम्यंते परिग्रहम्' इति। तथा च लैंगेऽपि
' महादेवपरा नित्यं चरंतो ह्यूर्ध्वरेतसः ॥ अर्चयंति महादेवं वाङ्मनःकायसंयताः ॥ रुद्रलोक

## ॐ गंगाधराय नमः ।

अमरतटि ी निजं वलमवेक्ष्य भवच्छिरसि गगनादपीपतद्तीव वेगोद्धुरा ॥
पटुतरजटाटवीमुपगता न दृष्टा कचित्परमशिवतां दधन्निगदितोऽसि गंगाधरः ॥२७॥

अमरेत्यादिः । धरतीति धरः गंगाया धरः गंगाधरः इत्याशयेनाह अमरतटिनी स्वर्नदी कुटिलापरनाम्नी निजं बलमवेक्ष्य स्वीयपराक्रमातिशयविशेषमालोच्य गर्वाद्वस्तुतः परमशिवभावानपायिन्या अपि पराशक्तेः कुतोऽपि ब्रह्मशापात्प्राप्तब्रह्मपरभाव जलरूपायाः पुनस्तत्प्राप्तिपूर्वकेच्छाविहारमहोत्सवानुभवो भावीति स्व स्वरूपानुसंधानप्रयुक्तपारवश्यात् । अथवा स्वर्गमृत्युपातालाख्येषु त्रिष्वतीव वेगादतवरत्याः मम धारणे के वा शक्ताः स्युर्न कोऽपि शक्नोतीत्याहंकारिकवृत्तिविशेषाद्भवच्छिरसीति । अन्यत्र सामर्थ्यदर्शनाभावादितिभावः । तथाचोक्तमारण्यके पर्वणि भगीरथं प्रति गंगायाः 'करिष्यामि महाराज वचस्ते नात्र संशयः ॥ वेगं तु मम दुर्धर्षं पतंत्या गगनच्युतम् ॥ न शक्तास्त्रिषु लोकेषु कश्चिद्धारयितुं नृप ॥ अन्यत्र विबुधश्रेष्ठान्नीलकंठान्महेश्वरात्' इति अन्यत्रापि ब्रह्मतर्कस्तवे दीक्षितैरप्युक्तम् 'गंगा धृता न भवता शिव पावनीति नास्वादितो मधुर इत्यपि कालकूटः ॥ संरक्षणाय जगता करुणातिरेकात्कर्मद्वयं कलितमेतदनन्यसाध्यम्' इति । अतिवेगोध्दुरेति । अत्यंतवेगेन उध्दुरा त्वरितगामिनी गगनादपीपतद्व्योम्नः पुनः पुनरापतत् । एवंभूतापि सा पराशिवपटुतरजटाटवीमनुप्राप्य इच्छाविहारवनवासमहोत्सवाद्यनुभवनेच्छया स्वसामर्थ्यावगुंठनप्रयुक्तलज्जया वा क्वचिदपि न दृष्टेत्यर्थः । एवंभूतगंगाधारणाद्गंगाधर इतिनाम्ना लोके निगदितो भवसीत्यर्थ.। मालाधराख्यं वृत्त मिदम् । तथाच पैंगलानामुक्तिः 'नसजसयलागुरुर्यादि तदैव मालाधरः' प्रतिपादं नगणः सगणो जगणः सगणः यगणश्चेति पंच गणा लघुर्गुरुश्चेत्तद्वृत्तं मालाधराख्यं भवतीर्थः ॥ २७ ॥

## ॐ ललाटाक्षाय नमः

उडुशशिरविसंहर्ता प्रलयसमयसप्तार्चिः ॥
तमुपरिनयने बिभ्रद्भव भवासि ललाटाक्षः ॥ २८ ॥

उडुिति ललाटे अक्षि नयनं यस्येति ललाटाक्षः उडवो नक्षत्राणि शशी चंद्रः रविर्भानुस्तेषां संहर्ता संहारको यः प्रलयसमयसप्तार्चिः प्रलयकालीनप्रचंडोद्दंडवातोपहितानलः तमुपरिनयने बिभ्रन्नयनत्वेन स्वीकुर्वंल्ललाटाक्ष इति प्रसिद्धो भवसीत्यर्थः । स्पष्टमवशिष्टम् । भुजगशिशुभृतारव्यं वृत्तमिदं तथा च वृत्तरत्नाकरे 'भुजगशिशुभृता नौमः' इति । प्रतिपादं नगणद्वयं मगण इति गणत्रयात्मकं भुजगशिशुभृताख्यं भवतीत्यर्थः ॥ २८ ॥

## ॐ कालकालायन नमः।

मार्कंडेयः कालमुखाद्विमुक्तो दग्धो रुद्रः काल इति प्रसिद्धः ॥
तूर्यां मूर्तिं विभ्रदुमादिनाथ प्रख्यातोऽसि त्वं भुवि कालकालः ॥ २९ ॥

कलयति नाशयति इति कालः मृत्युः कालाग्निरुद्रो वा तस्यापि कालः उपसंहारक इति कालकाल इत्यभिप्रायेणाह मार्कंडेयः कंडुतनयः कालमुखात्कालस्य मृकंत्योर्मुखमास्यं तस्मान्मुक्तः मोचितः एतेन मृत्यूपसंहारकः इत्याद्या व्युत्पत्तिर्दर्शिता । मार्कंडेयमृत्युनाशनं च लैंगे प्रतिपादितं यथा 'ततो निशम्य कुपितस्तीक्ष्णदंष्ट्रो भयंकरः ॥ करालवदनः कालः पाशहस्तो महाबलः ॥ सिंहनादं ततः कृत्वास्फोटयोच्चोच्चैर्मुहुः ॥ बबंध च मुनिं कालः कालप्राप्तं तमाह च ॥ मया बद्धोऽसि विप्रर्षे इतो नेतुं यमालयम् ॥ ब्रूहि वै देवदेवेन तव रुद्रेण किं कृतम्॥ क्व शर्वस्तव भक्तिः क्व क पूजा पूजया फलम्॥ कचाहं कनु मे भीतिश्चिन्नबद्धोऽसि वै मया ॥ लिंगेऽस्मिन्संस्थितश्चैव तव रुद्रो महेश्वरः । निश्चेऽष्टोभून्महादेवः कथं कथय शंकरः॥ ततः सदाशिवः स्वयं मुनिं निहंतुमागतं निहंतुमंतकं मनः स्मरांगयज्ञदाहकः॥ स्फुरन्बहिर्गतो वराच्छिवः स्वयं त्रिलोचनस्त्रियंबकरवचेष्टया च नंदिना गणेश्वरौ'इत्यादि।कालाग्निरुद्रोपसंहारकत्वाद्वा कालकाल इति द्वितीयां व्युत्पत्तिं दर्शयति दग्धो रुद्रइत्यादि। काल इति प्रसिद्धो यो रुद्रः सकलजगदुपसंहारकारकः कालाग्निरुद्र इत्यर्थः । तादृशोऽपि दग्धः नाशित इति वा कालकाल इत्यर्थः । अथ परमाशिवपंचविंशतिमूर्त्यंतर्गता या अष्टमूर्तिस्तां बिभ्रत्तदात्मकः सन्कालकाल इति प्रसिद्धो भवसीत्याह तूर्यां मूर्तिमिति तथाचोक्तं वातुलशुद्धे 'कालकालमथाष्टमम्' इति उमादिनाथेतिसंबुद्धिः श्रुतिप्रसिद्धं चेदं नाम । 'ज्ञः कालकालो गुणी सर्वविद्य' इति । गुणांगीसंज्ञकं वृत्तमिदं तथैव पैंगला आहुः'म्तौज्गौगः स्याद्ब्धिनगैर्गुणांगी' इतिप्रतिपाद्ंं मगणः तगणः जगणः गुरुद्वयं च चतुर्भिः सप्तभिश्च यतिः इत्येतद्वृत्तं गुणांगीसंज्ञकं भवतीत्यर्थः ॥ २९ ॥

## ॐ कृपानिधये नमः ।

दैतेयेषु जलधरादिषु स्वीयानामपकारिकेष्वपि ॥
सालोक्यादिपदानि दिन्ससि त्वं ख्यातोऽसि ततः कृपानिधिः ॥ ३० ॥

कृपायाः प्राणिमात्रसतापहरणेच्छाया निधिः आश्रय इति कृपानिधिः दैतेयेष्वित्यादि द्रितिकुलसमुद्भूता ये जलंधरप्रभृतयो दैत्येंद्राः कामं सुरगणोन्मूलनैकबद्धव्रतास्तेष्वपि सालोक्यसामीप्यसायुज्यादिस्थानानि वितरन्कृपानिधिरितिप्रसिद्धो भवसीत्यर्थः । जलंधरदैत्यादीनां वाणांधकासुरप्रभृतीनां परिग्रहः तथाचोक्तं लैंगे 'जलंधर इति ख्यातो जलमंडनसंभवः ॥ आसीदंधकसंकाशस्तपसा लब्धविक्रमः ॥ तेन देवाः सगंधर्वाः सयक्षोरगकिन्नराः ॥ निर्जिताः समरे सर्वे ब्रह्मा च

भगवान्हरिः ॥ इत्यादिक्मुक्त्वा "दैत्यैरन्यैस्तथान्यैश्च रथनागतुरंगमैः ॥ संनद्धैः सह संनह्य शर्वं जेतुं ययौ बली ॥ भवोऽपि देव्या दैत्येंद्र मेरुकूटमिव स्थितम् ॥ सान्तः सनंदी सगणः प्रावोच प्रहसन्निव ॥ किं कृत्यमसुरेशान युद्धेनानेन सांप्रतम् ॥ मद्बाणैर्भिन्नसर्वांग मर्तुमभ्युद्यतो वद ,, इत्यादिना पदांगुष्ठेन लीलयैव महार्णवे पातित इत्यादिकं तत्रैव प्रपंचितं 'कृत्वा र्णवांमसि च तं भगवानूथांगं स्मृत्वा जगत्त्रयजयेन सुरांश्च सर्वान् ॥ कामादकोऽन्धकपुरत्रययज्ञमूर्ति लोकत्रयांतककरः प्रहसंस्तदाह' इति । शुद्धविराट्संज्ञकं वृत्तमिदं तथाच पैंगलसूत्रं ' शुद्धविराण्म सौ ज्गौग' प्रतिपादं मगणः सगणः जगणः गुरुश्चेतद्वृत्तं शुद्धविराडिति भवतीत्यर्थः । तथा च वृत्त रत्नाकरे ' म्सौ ज्गौ शुद्धविराडिदं मतम्' इतितल्लक्षणम् ॥ ३० ॥

## ॐ भीमाय नमः ।

भिया वातो वाति ज्वलनदिनकरौ शक्रमृत्युप्रचेतो

मुखादेवास्त्वत्तोभयचकितहृदस्तत्पराः स्वस्वकार्ये ॥

नभोधिष्ठात्री ते तनुरतिविपुला सप्तगोदावरे च

प्रतीतस्त्वं लिंगे गिरिवरतनयानाथ तेनासि भीमः ॥ ३१ ॥

भियेति बिभेत्यस्मात्सर्वमिति भीमस्तदेव दर्शयति वातः वायुः ज्वलनः वन्हिः दिनकरः सूर्यः, शक्र इंद्रः मृत्युः कालः, प्रचेता वरुणः भयचकितहृदः भयेन चकितानि विह्वलीभूतानि हृदयानि येषां तादृशस्तत्पराः । तथा च वाय्वग्न्यर्केंद्रमृत्युवरुणप्रभृतयो ये देवगणास्ते सर्वेऽपि परमशिवप्रयुक्तभयाकुलितहृदयाः तत्तन्मर्यादानुल्लंघनेन स्वस्वकार्येषु शोषणदाहनप्रकाशनरक्षण प्राणिहरणाप्यायनरूपेषु निरंतरमप्यासक्ता भवन्ति इत्यर्थः । तथा च श्रुतिः ' भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेंद्रश्च मृत्युर्धावति पंचम ' इति । तथा ' यदिदं किंच जगत्सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एन विदुरमृतास्ते भवंति' इति एवं ' निर्देशेन शिवस्यैव भेदैः प्राणादिभिर्निजैः ॥ बिभर्ति सर्वभूतानां शरीराणि प्रभंजनः ॥ हव्यं वहति देवानां कव्यं कव्याशिनामपि ॥ पाकं च कुरुते च वन्हिः शंकरस्यैव शासनात् ' इति । अथवा आकाशाधिष्ठातृ-मूर्तिविशेषो वा भीमपदवाच्य इत्याह नभ इति । परम शिवस्य जगद्व्यापिका या तनुः सैव नभोऽधि ष्ठात्री मूर्तिरित्यन्वयः । तदुक्तं शिवपुराणे 'सर्वावकाशदा सर्वव्यापिका गगनात्मिका ॥ मूर्तिर्भीमस्य भीमाख्या भूतवृंदस्य भेदिका ' इति । सर्वेषां प्रवेशनिर्गमावकाशदा भूतवृंदस्य पृथिव्यादिचतुष्क-स्य पंचीकरणादिप्रक्रियया स्वानुप्रवेशेन व्यावर्तिकेति तदर्थादिति । सप्तगोदावर इति गोदावरी नद्या सप्त स्रवा भिन्ना स क्षेत्रविशेषस्तत्रत्यलिंगे भीमेश्वर इति प्रसिद्धो भवसीत्यर्थः । गिरिवर-तनयानाथेति संबुद्धिः । श्रुतिप्रसिद्धं चेदं नाम ' नम उग्राय च भीमाय च इति । सौभाग्यं

वृत्तमिदं तदुक्तमभियुक्तैः 'रथाश्वाश्वैः शोभा यमनततगौर्गेन युक्ता यदि स्यात्' इति प्रतिपादं यगणः, मगणः, नगणद्वयं, तगणद्वयं, गुरुद्वयं चेत्येतद्वृत्तं शोभाख्यं भवतीत्यर्थः ॥ ३१ ॥

## ॐ परशुहस्ताय नमः ।

अमोघचरितत्वं व्यनक्ति परशुस्ते ॥ शिवागमवचोभिस्ततः परशुहस्तः ॥ ३२ ॥

अमोघेति । परशुर्हस्ते यस्येति बहुव्रीहिः 'प्रहरणार्थेभ्य' इतिवार्तिकेन हस्तशब्दस्य परानिपातः । शिवागमवचोभिरमोघचरितत्वं तव परशुर्व्यनक्ति इत्यन्वयः । शैवे प्राधान्यप्रतिपादका ये आगमाः तदीयाभिर्वाग्भिरनन्यसाधारणाखिललोकरक्षणादिलक्षणमाचरणं व्यनक्ति प्रकटयतीत्यर्थः । तथा 'त्रैगुण्यं शूलमेतस्य परशुः सत्यनिष्ठता' । इत्याद्याः प्रागुपदर्शिताः स्मृतयश्चानुसंधेया इति । कुमारललिताख्यं वृत्तमिदं तथा च पैंगलसूत्रं 'कुमारललिता ज्सौग्' प्रतिपादं जगणः सगणः गुरुश्चेत्येतद्वृत्तं कुमारललिताख्यमुष्णिग्भेदो भवतीत्यर्थः ॥ ३२ ॥

## ॐ मृगपाणये नमः ।

दारुवनस्थैस्त्वाभिचरद्भिः प्रेषित एणो वेदशरीरः ॥
याचनमुद्रा वा तव हस्ते तत्स्थितोऽसि त्वं मृगपाणिः ॥ ३३ ॥

मृगः पाणौ यस्येति तथा मृगोऽपि हननसाधनत्वात्प्रहरणमेव मृगशब्दो मृगवत्परो वा अयं च मृगः न प्राकृतः किं तु ऋषिकृताभिचारयुक्तवेदे परिणत इत्याह दारुवनस्थैरिति दारुकावनकृतावासैः परमशिवं प्रत्यभिचरद्भिः अनिष्टमापादयद्भिश्चतुर्दशसंख्याकैरपि ऋषिभिः प्रयुक्तो योऽयं वेदात्मकशरीरशाली एणः मृगस्तु तस्य हस्ते धारणान्मृगपाणिरितिप्रसिद्धो भवसीत्यर्थः । पुरा हि भिक्षाटनव्याजेन सर्वा ऋषिपत्नीर्व्यामोहयंः संचरतं परमशिवं प्रत्यभिचारेणोत्पादिताः ये महागजव्याघ्रादयो दुष्टजन्तवः ते चाकिंचित्कराः प्रत्युत व्याघ्रचर्माम्बरधरत्वादिरूपनाममात्रोपक्षीणसामर्थ्यात्स्वरूपहीनाश्चाभवन्नित्यादिकं प्रतिपादितमन्यत्र तथाचोक्तं स्कान्दे 'ततो मृगं समुत्थाय शीघ्रमागच्छदंबरात् ॥ सर्वांञ्ज्ञानविहीनांस्तान्मृगतुल्यानिवाब्रुवन् ॥ आदाय वामहस्तेन दधारेशश्च निश्चल' इति । तस्य मृगस्य वेदात्मकत्वमुक्तं मृत्युंजयध्याने 'स्वकरकलितमुद्रापाशवेदाक्षमालम्' इति । अत्र वेदशब्दो मृगवाची 'मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम्' इति समानार्थकत्वेन ग्रंथांतरेषु प्रतिपादनात् । अथवा मृगो मार्गणं याचनमिति यावत् । 'मार्गणं मृगया मृग' इत्यमरः। तदेव हस्ते यस्येति वा तथा च याचनमुद्रेत्यत्र याचनायां मुद्रात्वोत्कीर्तनात् अशेषस्याप्याश्रितजनस्यानवरतमभिलाषितान्कामानहमेव दास्यामीति संकल्पनेन सूचनादनादिसिद्ध

भक्तवात्सल्यं सूचयन्नाह याचनमुद्रा चेति स्पष्टमन्यत् । रुक्मवतीसंज्ञकं वृत्तमिदं तथाचोक्तं पैंगलसूत्रे 'रुक्मवती भ्मौ स्गौ' प्रतिपादं भगणः मगणः सगणः गुरुश्चेत्तद्वृत्तं रुक्मवतीसंज्ञकं भवतीत्यर्थः । तथाच वृत्तरत्नाकरे 'भ्मौ सगयुक्तौ रुक्मवतीयम्' इतितल्लक्षणात् । पंक्तेर्भेदः ३३

## ॐ जटाधराय नमः

विविधतनुको दक्षध्वंसे बभूविथ यः पुरा मृगमनुययाचे कोऽन्यस्तु स्थितो मखमंडपे ॥
अखिलसरितः पारावारान्पवित्रतरान्धराञ्शिरसि कचतापन्नान्बिभ्रच्छ्रुतोऽसि जटाधरः ॥

पुराहि दक्षाध्वरहरणावसरे परशिवप्रकोपाग्निदाहे मयायज्ञपुरुषो मृगरूपेण पलायितः । अन्ये च सर्वे यथायथमज्ञातपूर्वचर्याः स्थगिताशयाश्चासन् । ततश्च भगवान्स्वयमेव साक्षात्किरातोपयुक्तचापबाणादिना तापसोपयुक्तजटादिना च द्विविधविशेषेण द्वे रूपे बभार । तत्रैकेन रूपेण यज्ञात्मकं मृगमनुससार । अपरेण चाध्वरशालाप्रविष्टजनहननोत्सुकमनाः स्थितः स एव च वीरभद्र इत्याख्यायिका वामनपुराणे प्रसिद्धा यथा 'तमेवानुससारेशश्चापमानम्य वेगवान् ॥ शरं पाशुपत कृत्वा कालरूपो महेश्वरः ॥ अर्धेन यज्ञवाट च जटाधर इति श्रुतिः' इत्यादि । तामेवाख्यायिकां प्रदर्शयति विविधतनुकइत्यादिना । स्पष्टं श्लोकार्धम् । अथवा केशाः संहतरूपेण सर्पाकारजटा. स्मृतास्तासां धरो जटाधरः इत्यभिप्रायेणाह अखिलसरित इति । सर्वाश्च महानद्यः सर्वे समुद्राः शैलाश्च कुलाचलप्रभृतय. शिरसि केशपाशतापन्नास्ता एव जटास्तासां धारणाज्जटाधर इति प्रसिद्धो भवसीत्यर्थ.। तदुक्तं वाराहपुराणे' जटास्वरूपेण समस्तसागराः कुलाचलाः सिधुवहाश्च सर्वत. ॥ शशी परिज्ञानमिदं तव स्थितं न दव पश्यति कुदृष्टयो जना' इति । हरिणीसंज्ञकं वृत्तमिदं तथा च पैंगलसूत्र ' हरिणी न्सौम्रास्लौग्रससमुद्रऋषय' इति । प्रतिपादं नगणः सगणः मगण. रगणः सगणः लघुर्गुरुश्चपङ्क्तिश्चतुर्भिः रसैश्च यतिरित्येतद्वृत्त हरिणी भवतीत्यर्थ. । तथाचोक्त केदारे 'रसयुगहयैर्न्सौ म्रौ स्लौगो यदा हरिणी तदा' अय तु अत्यष्टेर्भेदो हरिणीसंज्ञकः । ३४ ।

अथ मूलम्

कैलासवासी करुची कठोरस्त्रिपुरांतक ॥ वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रह ॥

इदं नामसप्तकं निर्वक्ति तत्रादौ प्रथमनाम्न्याख्यान निर्वक्ति हरेरित्यादिना

## ॐ कैलासवासिने नमः

हरेर्भूमिर्मेरौ हिमे मंदराद्रौ भवत्केलिभूम्यो भवत्केलिभूम्याः ॥
तदूर्ध्वं परा ज्ञानलभ्यास्ति तासु स्थितत्वेन जातोऽसि कैलासवासी॥

केलीनां विलासानां समूहः केलमास्यतेऽस्मिन्नित्यास आवासस्थानं केलस्यासः तत्र वस्तुं शीलमस्यास्तीति कैलासवासी तदेव दर्शयति हरेरित्यादि 'वैकुण्ठादूर्ध्वदेशे हिमगिरिशिखरे मंदराद्रौ

च मेरौ ' इति स्थलचतुष्टयवर्तिनः परमशिवविहारविशेषाः परमशिवकर्मैकनिष्ठाभिगम्याः पुनरावृत्तिशालिनश्चेति तत्तत्पुराणेषु प्रसिद्धाः तत्र हिमाचले वर्तमानः आरण्यके पर्वणि उत्तररामायणे प्रसिद्धः मेरुमंदारयोर्वर्तमानः कूर्मपुराणे प्रसिद्धः वैकुंठादूर्ध्वदेशे च वर्तमानः स्कांदे काशीखंडे दर्शितः यथा 'उपरिष्टात्क्षितेरष्टौ कोटयः सत्यमीरितम् ॥ सत्यादुपरि वैकुण्ठो योजनानां प्रमाणतः ॥ आलोकात्परिसंख्यातः कोटिषोडश संमितः ॥ यत्रास्ते श्रीपतिः साक्षात्सर्वेषामभयप्रदः ॥ ततस्तु षोडशगुणः कैलासोऽस्ति शिवालयः ॥ पार्वत्या सहितः शंभुर्गजास्यस्कंदनंदिभिः ॥ यत्र तिष्ठति विश्वेशः सकलः सपरिष्कृतः ' इति। वायवीयेऽपि ज्ञेयं विष्णुपदादूर्ध्वं दिव्यं शिवपुरं महत् ॥ भोगसंस्थानमतुलं कर्मयोगिरतात्मकम् ॥ अप्रमेयगुणैः सर्वैर्विमानैः सार्वकामिकैः ॥ असंख्यैस्तत्पुरं व्याप्तं सर्वप्राण्युपकारकैः ॥' इत्यादिना ' सर्वेषां शिवभक्तानां तत्परं परिकीर्तितम् ' इत्यंतेन । हरेर्मूर्ध्नीत्यत्र हरिशब्दो वैकुंठपरः मूर्धशब्दश्चोर्ध्ववाची वैकुंठादूर्ध्वदेश इत्यर्थः । तदूर्ध्वमिति तेषां चतुर्णामप्यूर्ध्वमुपरिदेशे वर्तमाना परा उत्कृष्टा ज्ञानलभ्या परशिवध्यानादियोगनिष्ठैकगम्या अतएव पुनरावृत्तिरहिता च तथाचोक्तं शिवधर्मोत्तरे ' ऊर्ध्वं शिवपुरात्तस्मात्स्थानत्रयमनुत्तमम् ॥ नित्यं परमशुद्धं च स्कंदोमाशंकरास्पदम् ' इत्युपक्रम्य 'संप्राप्ताः परमस्थानं ध्यानयोगरता नराः ॥ न तेषां पुनरावृत्तिर्घोरे संसारसागरे ॥ सर्वज्ञाः सर्वदा शुद्धाः परिपूर्णा महेश्वराः ॥ शिवतुल्यबलोपेताः परं शिवपुरं गताः' इत्यंतेन । तास्वित्यादि 'कैलासानां केलिभूमिः' इत्युक्तेः स्त्रीलिंगत्वेन निर्देशः । तासु पंचस्वपि परमशिवविलासभूमिष्वाविर्भूतत्वात्कैलासवासीति प्रसिद्धो भवानित्यर्थः । भुजंगप्रयातसंज्ञकं वृत्तमिदं तथाच पैंगलसूत्रं ' भुजंगप्रयातं यः ' जगतीत्यधिकारसूत्रात्प्रतिपाद्यं चत्वारो यगणाश्चेत्तद्वृत्तं भुजंगप्रयातसंज्ञकं भवतीत्यर्थः । तथाचोक्तं वृत्तरत्नाकरे ' भुजंगप्रयातं भवेद्यैश्चतुर्भिः ' इति लक्षणासिद्धं भवतीत्यर्थः ॥ ३५ ॥

## ॐ कवचिने नमः ।

वर्माभावे परशरनयनैः स्पृश्यो दृश्यो भवति हि सकलः ॥
स्वातंत्र्येण द्वयमपि तिरयन्दुष्प्रापत्वात्प्रभवसि कवची ॥ ३६ ॥

वर्मेति कवचवान्कवची सकललोकसाधारणं कवचस्य प्रयोजनं दर्शयति । शराश्च नयनानि च शरनयनानि परेषां शरनयनानि तैः परशरनयनैरित्यर्थः । तथा च शरीरसंरक्षकस्य कवचस्य व्यतिरेके परशरैः स्पृश्यः परनयनैर्दृश्यश्च भवतीति सर्वेषामपि लोकानां तदावश्यकमेवेति यथाक्रममन्वयः । अप्राकृतशरीरस्य परमशिवस्य प्राकृतकवचप्रयुक्तप्रयोजनानपेक्षणादन्यादृशमेव तत्कवचमित्याह स्वातंत्र्येणेत्यादि कवचेनेति शेषः । तत्कार्यकारित्वात्स्वातंत्र्यस्यापि कवचत्वोपपत्तिः । तथाच स्वातंत्र्याभिन्नेन कवचेन दर्शनस्पर्शनरूपप्रयोजनद्वयमपि तिरस्कुर्वन्प्राप्तुमशक्यत्वाच्च कवचीति प्रसिद्धो भवसीत्यर्थः । इदं च श्रुतिप्रसिद्धं नाम ' नमो बिल्मिने च कवचिने च ' इति

प्रमरविलसिताख्यं वृत्तमिदं तथाच पैंगलसूत्रं 'भ्रमरविलसितं म्भौ न्लौग्च' इति च-शब्दात्समुद्रा ऋषय इत्यस्यानुषंगः । तथाच प्रतिपादं मगणः भगणः नगण : लघुर्गुरुश्चतुर्भिः सप्तभिश्च यतिः इत्येतद्वृत्तं भ्रमरविलसिताख्यं भवतीत्यर्थः तथाच केदारे लक्ष्यं 'म्भौन्लौगस्य भ्रमरविलसितम्' इति त्रिष्टुभो भेदः ॥ ३६ ॥

## ॐ कठोराय नमः ।

घोरैका ते तनुरन्या शिवेति द्वे ते बिभ्रज्जगतां रक्षकोऽसि ॥
दुष्टा जीवा दमनेनैव रक्ष्याः पूर्णत्वाद्वा कथितस्त्वं कठोरः ॥ ३७ ॥

कठोरः क्रूरस्वभावः इत्यर्थः तदेव दर्शयति घोरैकेत्यादि । घोरात्मकं शिवात्मकं चेति द्वे शरीरे तत्र घोरात्मकमाग्नेयं रौद्राकारेण शिवात्मकं च सोम्यं वैष्णवाकारेण बिभ्रच्चराचरात्मकप्रपंच जालस्य संरक्षको भवसीत्यर्थः । तदुक्तं महाभारते आनुशासनिके पर्वणि 'वदंत्युग्रं महादेवं तथा देवं महेश्वरम् ॥ एकाक्षं त्र्यंबकं चैव विश्वरूपं शिवं तथा ॥ द्वे तनू तस्य देवस्य दैवता ब्राह्मणा-विदुः ॥ घोरामन्यां शिवामन्यां ते तनू बहुधा पुनः ॥ परा घोरा तनुर्वास्य साग्निविद्युत्समप्रभा ॥ शिवा सौम्या तथा ह्यया धर्मस्त्वापोऽथ चंद्रमाः॥आत्मनोऽर्थ तु तस्याग्निरुच्यते भरतर्षभ' इति। ननु सौम्यशरीरेण विष्णुनैवाखिलजगदवनसंभवे किमाग्नेयात्मकशरीरभरणेन रौद्रेणेत्याशंक्याह दुष्टा जीवा इति क्रूरस्वभावा ये महागजव्याघ्रादयो दुष्टजंतवस्ते सर्वेऽपि दंडनेनैव स्वस्वमर्यादावश-वर्तिनः न तु सामवादादिना 'सान्त्ववादः प्रकोपस्य जन्तोः क्रौर्यप्रदानतः' इतिन्यायादिति भावः घोरशरीरभरणं च परमशिवस्य जगद्रक्षणैकप्रयोजनकमित्यानुशासनिके व्यक्तमभिहितं यथा पार्व-त्युवाच 'भगवन्देवदेवेश त्रिनेत्र वृषभध्वज ॥ पिंगलं विकृतं भाति रूपं ते तु भयानकम् ॥ भस्मदिग्धं विरूपाक्षं तीक्ष्णदंष्ट्रं भयाकुलम् ॥ व्याघ्रोदरत्वक्संवीतं कपिलश्मश्रुसंमितम्॥ रौद्रं भया-नकं घोरं शूलपट्टसुसंयुतम् ॥ किमर्थमीदृशं रूपं तन्मे शंसितुमर्हसि ॥ श्रीमहादेव उवाच । तदहं कथयिष्यामि शृणु तत्त्वं समाहिता ॥ द्विविधो लौकिको भावः शीतमुष्णमिति प्रिये ॥ तयोर्निग्रंथितं सर्वं सौम्याग्नेयमिदं जगत् ॥ सौम्यत्वं सततं विष्णौ मय्याग्नेयं प्रतिष्ठितम् ॥ अनेन वपुषा नित्यं सर्वाँल्लोकान्बिभर्म्यहम् ॥ रौद्राकृतिं विरूपाक्षं शूलपट्टसुसंयुतम् ॥ आग्नेयमिति मे रूपं देवलोकहिते रतम्॥यद्यहं विपरीतः स्यामेतत्त्यक्त्वा शुभानने ॥ तदेव सर्वलोकानां विपरीतं प्रवर्तते ॥ तस्मान्मयेदं ध्रियते रूपं लोकहितैषिणा' इति । अथवा कठोरः पूर्णः 'कठोरः कठिनः पूर्ण' इत्यमरः । 'कठोरता-राधिपलाञ्छनच्छविः' इति प्रयोगाच्च । तथाच नित्यतृप्तस्त्वरूप इत्यभिप्रायेणाह पूर्णत्वाद्वेति अवशेषं स्पष्टार्थम्।वातोर्मीसंज्ञकं वृत्तमिदं तथा च सूत्रं'वातोर्मी म्भौत्गौग च' प्रतिपादं मगणः भगणः तगणः गुरुद्वयं चेत्तद्वृत्तं वातोर्मीसंज्ञकं भवतीत्यर्थः । तथाच केदारे 'वातोर्मीयं गदिता म्भौतगौ गः' इति त्रिष्टुभो भेदः ।

## ॐ त्रिपुरांतकाय नमः ।

स्थूलं लिंगं कारणमिति यत्त्रयं वपुषां नृणां भक्तानां चेत्तदखिलमपि त्वमंतयासि क्षणात् ॥
यद्वा नाथ त्रिपुरदहनादलौकिकचर्यया श्रीशैलेऽसि प्रथिततनुमानिति त्रिपुरांतकः ३८

त्रीणि पुराणि शरीराणि 'पुरसंज्ञे शरीरेऽस्मिन्शयनात्पुरुषो हरिः' इतिविष्णुपुराणवचनात् । नवद्वारे पुरे देही इतिगीतोक्तेश्च । तेषामंतको नाशक इत्यभिप्रेत्याह स्थूलं लिंगमित्यादिना स्थूलं परिदृश्यमानं भौतिकं शरीरं लिंगं सूक्ष्ममंतःकरणाद्यात्मकं कारणमविद्यास्वरूपं चेति यच्छरीराणां त्रयं तन्नृणां परमशिवपराङ्मुखवृत्तिकानां पामराणामेव । नतु त्वद्भक्तानामपि भक्तानां तु स्मृतिमात्रादेव तदखिलमपि शरीरत्रयं युगपदेवांतयासि नाशयसीत्यर्थः । अथवा त्रीणि यानि पुराणि कांचनराजतायसमयानि स्वर्गांतरिक्षमर्त्यलोकानुचारीणि तारकाक्षकमलाक्षविद्युन्मालिसंज्ञकैर्दैत्यराजैरधिष्ठितानि महादुर्गाणि तेषामंतको नाशकः तथाचोक्तं लैंगे 'निहते तारके दैत्ये तारपुत्रे सबांधवे ॥ स्कंदेन चाप्रयत्नेन तस्य पुत्रा महाबलाः ॥ विद्युन्माली तारकाक्षः कमलाक्षश्च वीर्यवान् ॥ तपस्तेपुर्महात्मानो महाबलपराक्रमा' इत्युपक्रम्य 'कांचनं दिवि तत्रासीदंतरिक्षे च राजतम् ॥ आयसं चाभवद्भूमौ पुरं तेषां महात्मनाम् ॥ एकैकं योजनशतविस्तारायतमंसमम् ॥ कांचनं तारकाक्षस्य कमलाक्षस्य राजतम् ॥ विद्युन्मालेश्चायसं च त्रिविधं दुर्गमुत्तमम् ॥' इत्यादि इत्यभिप्रेत्याह यद्वेति अलौकिकचर्ययेति । अलौकिकचर्यापि 'शूलशक्तिगदाहस्तान्दंष्ट्राचापशुलायुधान् ॥ नानाप्रहरणोपेतान्नानाविषधरांस्तथा ॥ कालाग्निरुद्रसंकाशान्कालसूर्योपमांस्तथा' इत्यादिना तत्रैव विशदं प्रपंचिता ॥ श्रीशैलेति यद्यपि 'श्रीशैले मल्लिकार्जुन' इति प्रसिद्धस्तथाप्यष्टषष्टिशिवक्षेत्रपरिगणनावसरे 'श्रीशैले त्रिपुरांतकम्' इत्याभिधानात्तथोक्तम् । इदं श्रुतिप्रसिद्धं नाम 'महादेवाय त्र्यंबकाय त्रिपुरांतकाय' इति ॥ माराक्रातांख्यं वृत्तमिदं तथाचोक्तमभियुक्तैरभिनवरत्नाकरे 'माराक्रांता श्रुतिरसहयैर्मतौ नरसा लगौ' इति प्रतिपादं मगणः तगणः नगणः रगणः सगणः लघुर्गुरुश्चतुर्भिः षड्भिः सप्तभिश्च यतिरित्येवंसप्तदशसंख्याक्षरात्मकात्यष्टिभेद इत्येतद्वृत्तं माराक्रांताख्यं भवतीत्यर्थः' ॥ ३८ ॥

## ॐ वृषांकाय नमः ।

त्वं गवामनयतः कुपितोऽपि प्रार्थितोऽसि सुकृतेन वृषेण ॥
तेनतद्ध्वजरथो वृषशैले विश्रुतोऽस्युभयथापि वृषांकः ॥ ३९ ॥

त्वमिति वृषो धर्मः स एवांको लाञ्छनं यस्य स वृषांकः वृषध्वजो वृषवाहनश्चेत्यर्थः । गवां धेनूनामनयतः नयो न्यायः स नभवतीत्यनयः । न्यायविरोधी अपराध इति यावत् । तस्मात्कुपितोऽपि क्षुब्धोऽपि सुकृतात्मकेन वृषेण प्रार्थितः समाराधितः सन्वृषभध्वजो वृषवाहनश्चेति प्रसिद्धो भवसीत्यर्थः । तथाचोक्तं महाभारते उमामहेश्वरसंवादे पार्वत्युवाच 'भगवन्देवदेवेश पिनाकपरमप्रिय ॥ वाहनेषु तथान्येषु सत्सु भूतपते तव ॥ अयं तु वृषभः कस्माद्वाहनं स यथाभवत् ॥ शिव उवाच

आदिसर्गे पुरा गावः श्वेतवर्णाः शुचिस्मिते ॥ बलसंहननोपेता दर्पयुक्ताश्चरंति ताः ॥ अहं तु तप आतिष्ठंस्ताभिन्काले शुभानने ॥ एकपादश्चोर्ध्वबाहुर्लोकार्थं हि भवद्गिरौ ॥ गावो मे पार्श्वे आगत्य दर्पोत्सिक्ताः समंततः ॥ स्थानभ्रंशं तदा देवि चक्रिरे बहुशस्तदा ॥ अपकारेण चैतासां मनःक्षोभोऽभवन्मम ॥ तस्माद्दग्धा यदा गावो रोषाविष्टेन चेतसा ॥ तस्मिंस्तु व्यसने घोरे वर्तमाने पशून्प्रति ॥ अनेन वृषभेणाहं शमितः संप्रसादनैः ॥ तदाप्रभृति शाताश्च वर्णभेदत्वमागताः ॥ श्वेतोऽयं वृषभो देवि सर्वसंस्कारसंयुतः ॥ वाहनत्वे ध्वजत्वे च तदाप्रभृति योजितः ॥ तस्मान्मे गोपतित्वं च देवैर्गोभिश्च कल्पितम्' इति । वृषस्य धर्मरूपत्वं स्कांदे प्रतिपादितं 'तस्माद्धर्मः सदा शंभोर्वृषरूपेण वाहनम्' इति । शैवागमे 'शुद्धस्फटिकसंकाशो धर्मरूपो वृषः स्मृत' इति । वृषशौ॰मिति क्षेत्रविशेषः । स्वागताख्य वृत्तमिदं तथाच पैंगलसूत्रं 'स्वागता नौं भौगू' प्रतिपादं रगणः नगणः भगणः गुरुद्वयं चैतद्वृत्तं स्वागताख्यं भवतीत्यर्थः । तथाच वृत्तरत्नाकरे 'स्वागतेति रनभ द्गुरुयुग्मम्' इति त्रिष्टुब्भेदः ॥ ३९ ॥

## ॐ वृषभारूढाय नमः ।

नंद्यारोहात्त्रैपुरदाहे हरिणा पृष्ठे वेदाश्वानां गोवृषरूपे समुपात्तत्वात् ॥
धर्मज्ञानैश्वर्यविरागेषु निरूढत्वाद्विख्यातोऽसि त्वं सुरवृंदे वृषभारूढः ॥ ४० ॥

वृषसेचने इतिधातोः सर्वकामानां वर्षणाद्वृषभः । 'ऋषवृषभ्यां कित्' इत्यौणादिको भच्प्रत्ययः। तमारूढो वृषभारूढः द्वितीयेतियोगविभागात्समासः । नंदिवाहन इत्यभिप्रायेणाह नद्यारोहादिति । अथवा त्रिपुरदहनप्रस्तावे सकलदेवमयरथमाधिरोहति परमशिवे तद्भाराक्षमतया भुग्नजानुषु वेदात्मकाश्वेषु हरिणा वृषभरूपेण स्वपृष्ठभागे रथस्य धारणादिति परंपरया वा वृषभारूढ इत्यभिप्रेत्याह त्रैपुरदाहेत्यादि । हरिणा विष्णुना वेदाश्वानां वेदात्मकानामश्वानामुपात्तत्वात् । तथाचोक्तं लैंगे 'इंद्रियाणि मनश्चैव भूषणानि समंततः ॥ श्रद्धा च गतिरस्यैव वेदास्तस्य हयाः स्मृताः' इत्याद्युपक्रम्य 'आरुरोह रथं युक्तरणमंडलविभ्रमः ॥ सर्वदेवमयो भूत्वा कंपयन्निव रोदसीम् ॥ ऋषिभिः स्तूयमानश्च वृतश्चाप्सरसां गणैः ॥ सुशोभमानो वरदः संप्रेक्ष्यैव स सारथिम् ॥ तस्मिन्नारोहति रथं कल्पितं लोकसंभृतम् ॥ शिरोभिः पतिता भूमौ तुरंगा वेदरूपिणः ॥ अथ ध्वस्तात्रथस्यास्य भगवान्धरणीधरः ॥ वृषेंद्ररूपी चोत्थाय स्थापयामास वै रथम् ॥ क्षणांतरे वृषेंद्रोऽपि जानुभ्यामगमद्धराम् ॥ अभीषुभिश्च भगवानुद्यम्य च भयाद्विधिः ॥ स्थापयामास देवस्य वचनाद्वै रथं शुभम् ॥ ततोऽश्वांश्चोदयामास मनोमारुतरंहसः ॥ पुराण्युद्दिश्य स्वस्थानि दानवानां तरस्विनाम्' इति । अथवा वृषशब्दो धर्मवचनः । भाशब्दश्च ज्ञानपरः । ऐश्वर्यस्य धर्मसाध्यत्वाद्वैराग्यस्य च ज्ञानस्य साध्यत्वाद्धर्मज्ञानैश्वर्यविरागाश्चत्वारोऽपि वृषपदप्रतिपाद्यास्तेष्वारूढो वृषभारूढस्तदैकनिष्ठ इत्यभिप्रेत्याह धर्मज्ञानेत्यादि । शेषं सुगमम् । गोवृषाख्यं वृत्तमिदं तथाचोक्तमभियुक्तैः 'वेदैर्दिग्भिर्मातयसा गोवृष उक्तो गौ' प्रतिपादं मगणः तगणः सगणः गुरुद्वयं

च चतुर्भिर्दशभिश्च यतिरित्येतद्वृत्तं गोवृषसंज्ञकं भवतीत्यर्थः वृत्तनाम्नोऽपिसंग्रहान्मुद्रालंकारः ४०

## ॐ भस्मोद्धूलितविग्रहाय नमः ।

स्वांगे भस्म विलिंपन्नाथ ज्ञानांगशिरोव्रतमुपदिशसि ॥
भूतेशाभिधतीर्थेऽपि त्वं भस्मोद्धूलितविग्रहनामा ॥ ४१ ॥

भस्मना भूत्या उद्धूलितः विग्रहो देहो यस्य स भस्मोद्धूलितविग्रहः स्वांगे निजशरीरे भस्म भूतिं विलिंपयन्नाथेति संबुद्धिः ज्ञानांगेति परमशिवपरतत्वावगमननिदानभूतं यच्छिरोव्रताख्यं-कर्म तद्भस्मोद्धूलनमेवेत्युपदिशसीत्यर्थः । शिरोव्रतस्य भस्मोद्धूलनात्मकत्वं ब्रह्मविद्यांगत्वं च सौर-संहितायां मुंडके च प्रतिपादितं यथा 'अग्निरित्यादिभिर्मंत्रैः षड्भिःशुद्धचेत भस्मना ॥ सर्वांगोद्धूलनं कुर्याच्छिरोव्रतसमाह्वयम्' इति 'तस्मा एवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति च पापरोगपाशानां त्रयाणां भर्त्सनाद्भस्मेत्यर्थः । तत्र पापनाशकत्वं जाबालश्रुतौ प्रतिपादितं 'पापं नाशयते कृत्स्नमपि जन्मशतार्जितम्' इति । रोगमर्दनं चानुशासनिके उमामहेश्वरसंवादे प्रदर्शितं 'रक्षार्थं मंगलार्थं च भस्म दत्तं मया पुरा' इति । पाशानिर्हरणं ब्रह्मोत्तरखंडे प्रसिद्ध यथा 'उद्धूलनं त्रिपुंड्रं च मायापाशनिवृत्तये ॥ आचरंति मुनिश्रेष्ठा अथर्वशिरसि स्थितम्' इति ॥ तथा वासिष्ठ लैंगेऽपि 'भर्त्सनात्सर्वपापानां पाशानां च महामुने ॥ भस्मेति कीर्त्यते रक्षोरोगाणां चापि भर्त्सनात इति । भूतेशाभिधतीर्थमिति क्षेत्रविशेषः । शेषं स्पष्टार्थम् । पादाकुलकाख्यं वृत्तमिदं तथाच पैंगलसूत्रं 'एभिः पादाकुलकं षोडशमात्रापादैः' मात्रासमकादिजातिपंचकसंबंधिभिर्यैः कैश्चिदनियमेन घटिता जातिः । पादाकुलकाख्यं वृत्तं भवतीति । तथाच वृत्तरत्नाकरे 'यदतीतकृतविविध-लक्ष्मयुतैर्मात्रासमादिपादैः कलितम् ॥ अनियतवृत्तपरिणामसहितप्रथितं जगत्सु पादाकुलकम्' इति ॥ ४१ ॥

अथ मूलम् ।

सामप्रियः स्वरमयस्त्रयीमूर्तिरनीश्वरः ॥ सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः

इति सप्त नामानि निर्वक्ति तत्रादौ सामप्रियपदं व्याख्याति

## ॐ सामप्रियाय नमः

चंदनस्पर्शशीतामृतस्यंदिनी सांत्ववाक्सामवेदोऽथ सामानि वा ॥
तैः प्रयुक्तैरतीवेश संप्रीयसे गीयसे तेन लोकेषु सामप्रियः ॥ ४२ ॥

चंदनेति । चंदनस्पर्शवच्छीतला चित्ताल्हादकारी अमृतस्यंदिनी सुधावर्षिणी या सांत्ववाक्सैव सामपदार्थः तत्र प्रियः सामप्रिय इत्यर्थः । मृदुवाक्प्रियत्वं च परमशिवस्य शिवधर्मोत्तरे प्रदर्शितं यथा 'अमृतस्यंदिनीं वाचं चंदनस्पर्शशीतलाम् ॥ सर्वत्रैव प्रयुंजानः शिवलोके महीयते'

इति । साम्नश्च सर्वाभ्यर्हितत्वात्तत्प्रीत्यौचित्यात् । तथाच श्रुतिः ' ऋचो ह यो वेद स वेद देवान्यजूंषि यो वेद स वेद यज्ञम् ॥ सामानि यो वेद स वेद सर्वम् ' इति । तथा गीतायामपि ' वेदानां सामवेदोऽस्मि' इति । अथवा सामानि गीतिविशेषा ' गीतिषु सामाख्या ' इति जैमिनिसूत्रात् । तत्र प्रियस्तथेत्याभिप्रेत्याह । अथ सामानिवेति सामगानप्रियत्वं च परमशिवस्य प्रसिद्धमेव तथाचोक्तं भारते उपमन्यूपाख्याने ' ब्रह्मा भवं सदास्तोषीद्रथंतरमुदीरयन् ॥ ज्येष्ठसाम्ना च देवेशं जगन्नाराधणप्रभुः ' इति । तैरिति यतः सामगानविशेषैः स्तूयमानः सन्नतीव प्रीयसे अतः लोकेषु सामप्रिय इत्येवं गीयस इत्यर्थः । स्रग्विणीसंज्ञकं वृत्तमिदं तथा च पैंगलसूत्रं 'स्रग्विणी रः ' जगत्यधिकारात्प्रतिपादं चत्वारो रगणाश्चेत्तद्वृत्तं स्रग्विणीसंज्ञकं भवतीत्यर्थः । तथा च केदारे लक्ष्यं ' रैश्चतुर्भिर्युता स्रग्विणी सा मता ' इति ॥ ४२ ॥

## ॐ स्वरमयाय नमः ।

षड्जोदात्तमुखाः स्वरा अवयवा वेदैकवपुषःसांब व्यंजनको भवान्स्वरमयी शक्तिस्तव मता ॥
ॐ कारावयवेषु मप्रभृतयो रुद्रेश्वराशिवाः सर्वे यस्य विभूतितां विदधते सोऽपि स्वरमयः ॥४३॥

अथवा स्वरशब्दो यावद्गीपरस्तन्मयः । अथवा स्वरो नाम अच् । स चात्र विवक्षया प्रणवरूपः । 'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ॥ तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ' इति प्रयोगदर्शनात् । तन्मयस्तत्स्वरूपः सर्ववेदसारप्रणवात्मक इत्यर्थः । तदेव क्रमेण दर्शयति । षड्जेत्यादिना षड्जप्रभृतयः ... उदात्तप्रभृतयश्च ये स्वराः निषादर्षभगांधारषड्जमध्यमधैवतपंचमाः उदात्तानुदात्तस्वरितप्रचयाख्या वा ते सर्वेऽपि आगमैकशरीरस्य परमशिवस्यावयवविशेषा एव । ' ध्वनीनामपि वर्णाना वेदो मूर्तिरुदीरिता ' । इत्यागमवचनेन तेषां वेदैकवपुषः संभवात् । तथाचावयवावयाविनोरभेदात्स्वरमय वोपपत्तिरिति भावः । यावद्वर्णात्मकत्वेन स्वरमयत्वं दर्शयति सांबेत्यादिना । सांबेति संबुद्धिः । व्यंजनक इति काद्यः क्षांताः व्यंजनानि तदात्मकः परमशिवः । आद्यो विसर्गाताः स्वरास्तन्मयी शक्तिः । शिवशक्त्योरभेदाच्च स्वरमय इत्यर्थः । तदुक्तं शैवतंत्रे ' आकारादिविसर्गांतस्वराः शक्तिरुदीरिता ॥ ककारादिक्षकारान्ता वर्णाः परशिवः स्मृतः ' इति । प्रणवात्मकत्वेन स्वरमयत्वं दर्शयति ॐ कारेत्यादि आकारोकारमकारनादबिन्द्वाख्याः पंचावयवाः प्रणवस्य तत्र मप्रभृतयो रुद्रेश्वराशिवा इत्यनेन आकारोकारप्रतिपाद्ययोः ब्रह्मविष्णुरुद्रेश्वरसदाशिवापरनामानः परमपुरुषास्ते सर्वेऽपि यस्य विभूतितां विदधते त्वदीयसामर्थ्यातिशयवशात्स्वस्वकार्यकरणोपयुक्तसामर्थ्यशालिनो भवंतीत्यतः स्वरमयो भवानित्यर्थः । ' प्रणवो वाचकस्तस्य शिवस्य परमात्मनः ॥ शिवरुद्रादिशब्दानां प्रणवो हि परः स्मृत. ॥ तस्मादेकाक्षरं देवमाहुरागमपारगाः ॥ वाच्यवाचकयोरैक्यं मन्यमाना मनस्विन ' इति । चतुर्मात्रात्मकत्वेनापि प्रणवः प्रतिपादितस्तत्रैव यथा ' अस्य मात्राः समाख्याताश्चतस्रो वेदमूर्धनि ॥ अकारश्चाप्युकारश्च मकारो नाद इत्यपि ॥ अकारं ऋग्वचं प्राहुरुकारो यजुरुच्यते ॥ मकारः सामना

दोऽस्य श्रुतिराथर्वणी स्मृता ॥ अकारस्तु महान्बीजं रजः स्रष्टा चतुर्मुखः ॥ उकारः प्रकृतिर्योनिः सत्त्वं पालयिता हरिः ॥ मकारः पुरुषो बीजं तमः संहारको हरः ॥ नादः परः पुमानीशो निर्गुणोऽविक्रियः शिवः ॥ एवं तिसृभिरेवैषां मात्राभिर्निखिलक्रियाः ॥ अभिधाय शिवात्मानं बोधयत्यर्धमात्रया' इति । शार्दूलललिताख्यं वृत्तमिदं तथाचोक्तमभियुक्तैः 'छंदो भानुरसो मसौ जसतसाः शार्दूललितम्' इति । प्रतिपादं मगणः सगणः जगणः सगणः तगणः सगणश्च द्वादशभिः षड्भिश्च यतिरित्येतद्वृत्तं शार्दूलललिताख्यं भवतीत्यर्थः ॥ ४३ ॥

## ॐ त्रयीमूर्तये नमः ।

सांब ऋग्वेदकोऽस्यागलांताद्वाचनाभेर्यजुर्वेदरूपः ॥
नाभिदेशादधः सामवेदस्तेन तेऽभूत्त्रयीमूर्तिनाम ॥ ४४ ॥

[?] ऋग्यजुःसाम्नां त्रयाणां समुदायस्त्रयी ' इति वेदास्त्रयस्त्रयी ' इत्यमरात् । सैव मूर्तिः शरीरं यस्येति । त्रयीमूर्तिर्वेदत्रयीशरीरक इत्यर्थः । तदेव विभज्य प्रदर्शयति सांबेत्यादिना सांबेति संबुद्धिः । आगलांतादिति ब्रह्मरन्ध्रादि कंठांतमृग्वेदस्वरूपः । आ च नाभेरिति कंठादिनाभिपर्यन्तं यजुर्वेदस्वरूपः । नाभिदेशादिति । नाभ्यादिपादपर्यंतं सामवेदस्वरूप इत्येवं वेदत्रयात्मकमूर्तिमानित्यर्थः । ननु देव्या एवं त्रयीमूर्तित्वं कूर्मपुराणे हिमवंतं प्रति देवीवचनेन प्रदर्शितं यथा ' ममैवान्या परा मूर्तिर्वेदसंज्ञा सनातनी ॥ ऋग्यजुःसामरूपेण सर्गादौ संप्रवर्तते ' इति । तथाच शिवपुराणे ' शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा ॥ अर्थस्वरूपमखिलं धत्ते मुग्धेंदुशेखर ' इत्यशेषशब्दजालमूर्तिकत्वं तस्या एव प्रपंचितमिति तत्कथं परमशिवस्य त्रयीमूर्तिकत्वोपवर्णनमिति चेन्न । परमशिवस्य वस्तुतः पराशक्तिप्रयुक्तभेदाभावात् । तच्छरीरभिन्नशरीरतया च शक्तिप्रतापस्य परमशिव एव पर्यवसानादित्यभिप्रायेण तथोक्तमिति । सर्वमवदातम् । त्रयीसंज्ञकं वृत्तमिदम् । तथा चोक्तमभियुक्तैः ' रत्रयश्चेत्त्रयीनामकं ग ' इति प्रतिपादं रगणत्रयं गुरुश्च यत्र भवति त्रयीसंज्ञकं वृत्तं भवतीत्यर्थः । अयं पंक्तेर्भेदो दशाक्षरपरिमाणः ॥ ४४ ॥

## ॐ अनीश्वराय नमः ।

ईश्वरत्वावधिर्यः स सर्वेश्वरः ॥ तस्य नेशः परस्त्वं ततोऽनीश्वरः ॥ ४५ ॥

न विद्यते ईश्वरो यस्य सः अनीश्वरः । निरवधिकैश्वर्यशालीत्यर्थः । उच्चनीचात्मकेऽस्मिन्प्रपंचे सर्वेऽपि लोकास्तरतमभावेन तत्तत्प्राणिप्रवर्तकलक्षणैश्वर्यशालिन एवेति सावधिकमेवैतेषामैश्वर्यं निरवधिकैश्वर्यशाली च परमशिव एव । सर्वजगदीशितुस्तस्येश्वरांतरानपेक्षणादित्यनीश्वरत्वं तस्येत्यभिप्रेत्याह ईश्वरत्वेति । ईश्वरत्वस्य सकलप्राणिप्रवर्तकत्वलक्षणैश्वर्यस्य योऽयमवधिमर्यादाश्रय स एव सर्वेश्वरः । तस्य सर्वेश्वरस्य ईशः नियंता परः अन्यः न विद्यते इत्यतस्त्वमेवानीश्वर इत्यर्थः । तथाच श्रुतिः ' न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिंगम् ॥ स कारणाकारण-

चेन्द्रियसामान्यजन्यवृत्तिविषयीकरणायोगत्वाज्जगत्प्रकाशकान्यपि त्वदिंद्रियाणि त्वत्प्रकाशने अ समर्थान्येवेति भावः 'यतो वाचो निवर्तंते अप्राप्य मनसा सह' इतिश्रुतेः।एतेन सोमसूर्याग्नयो लोचनानि यस्येति नामव्युत्पत्तिः प्रदर्शिता । तदुक्तमानुशासानिके उपमन्यूपाख्याने 'दिवसकरशशांकवन्हिनेत्रं त्रिभुवनसारमपारमीशमाद्यम्॥ अजरममरमप्रसाद्य रुद्रं जगति पुमानिह को लभेत शांतिम्' इति ॥ किंच भांतं स्वतःप्रकाशमानं यमनुसृत्य अमी भास्वदादयः सूर्याद्यो भांति प्रकाशंते अतः सोमसूर्याग्नि वल्लोचनयति प्रकाशयतीति सोमसूर्याग्निलोचनः इत्येवं निर्वचनमपि सांप्रतं युक्तमित्यर्थः । तथाच च श्रुतिः 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भांति कुतोऽयमग्निः तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति । स्मृतिरपि 'न तद्भासयते सूर्यो न शशांको न पावकः ॥ यद्गत्वा न निवर्तंते तद्धाम परमं मम' इति इदं तु लोचनाख्यं वृत्तं तथाचोक्तमभियुक्तैः 'रोयजौ गुरु-लोचनं भवेत्' इति। प्रतिपादं रगणः यगणः जगणः गुरुश्चेतद्वृत्तं लोचनाख्यं भवतीत्यर्थः। पंक्तेर्भेदोऽयं दशाक्षरपादोऽत्र ॥ ४८ ॥

हविर्यज्ञमयः सोमः पंचवक्त्रः सदाशिवः ॥ विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः ॥
इति नव नामानि निर्वक्ति । तत्रादौ हविः पदं प्रपंचयति ।

## ॐ हविषे नमः ।

दुग्धमात्रस्य कुहरे यथा घृतं प्राणिमात्रस्य दहरे तथा भवान् ॥
चेतसा संमथित एव लभ्यते हूयमानं त्वमखिलं ततो हविः ॥ ४९ ॥

हविःशब्दो घृतवाची घृतमाज्यं हविः सर्पिरित्यमरात् । तत्सदृशाय नमः इत्येतद्धृतपुरःस-रमुपवर्णयति तथाहि दुग्धमात्रांतः संलीनमपि घृतं सम्यङ्मथनाद्बहिःप्रकाशमापद्यते तथा प्राणि-मात्रांतःसंलीनोऽपि भवाञ्छ्रवणाद्यनेकसाधनैर्मनसा पुनःपुनः परिचीयमानः प्राप्त इव भवसीत्यर्थः तथा च श्रुतिः 'घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् ॥ सततं मंथयितव्यं मनसा मंथानभूतेन' इति ॥ अथवा हविः हूयमानं सोमरसात्मकद्रव्यसामान्यं परब्रह्मस्वरूपं तावद्रूप इत्यर्थः । तदुक्तं शिवपुराणे 'रजसा तं महादेवी देवो रसयिता शिव' इति । तथा च भोक्तव्य-वस्तुमात्रस्य देविरूपतया तदभेदात्परमशिवोऽपि तद्रूपः । तथा 'ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ॥ ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना' इतिस्मृतेः । ब्रह्मात्मकहवीरूपत्वं तस्येत्य-भिप्रेत्याह हूयमानमित्यादि । स्पष्टमन्यत् । दुग्धाख्यं वृत्तमिदम् ॥ तथाचोक्तमभियुक्तैः 'दुग्धवृत्तं रभजरैरुद्गीरितम्' इति । प्रतिपादं रगणः भगणः जगणः रगणश्चैतद्वृत्तं दुग्धाख्यं भवतीत्यर्थः जगत्या भेदोऽयं द्वादशाक्षरपरिमितपादः ॥ ४९ ॥

## ॐ यज्ञमयाय नमः ।

वेदः पादो युपो दंष्ट्रानलचयनरसनवदनस्तनूरुहधर्मकः
स्रौवश्चंचुः सार्पनासो दिवसरजनिनयनयुगः करसवनत्रयम् ॥
औद्गात्रांत्रो वेदीस्कंधश्च चरणयुगलमुपनिपत्प्रवर्ग्यकचभ्रामि-
र्वक्षोदाक्षिण्यो मंत्रस्फिग्विविधमखकरणतनुकोऽसि यज्ञमयाभिधः ॥ ५० ॥

यज्ञमयो यज्ञस्वरूपः मयटः स्वरूपवाचित्वात् तथाच 'यज्ञो वै विष्णुः' इत्यादिश्रुत्यवग-तयज्ञपुरुषात्मकतोपयुक्तैस्तत्तदवयवैः परमशिवमेव प्रस्तौति 'वेदः पाद' इत्यादिना यज्ञांगाना-मेव परमशिवांगत्वाद्वेदादीनां पादत्वाद्युत्कीर्तनम् । अनलचयेति । अनलरसनः चयनवदनश्चे-तिक्रमेणान्वयः । तनूरुहाणि रोमाणि तान्येव धर्माः धर्मस्वरूपाणि यस्य स तनूरुहधर्मकः । स्रुव एव स्रौवस्तदात्मकं चंचुः दीर्घनासाग्रविशेषः सार्पिराज्यं तदात्मिका नासा यस्य सः सार्पिर्नासः दिवसरजनी दिवसरात्री तदात्मकं नयनयुगं यस्य सः दिवसरजनिनयनयुगः । सवनत्रयमिति प्रातर्मध्यंदिनं तृतीयं चेति सवनत्रयात्मकः करः औद्गात्राण्येव आंत्राणि यस्य सः औद्गात्रांत्रः वेदिकास्वरूप एव स्कंधः उपनिषदात्मकं चरणयुगलं पादद्वयं प्रवर्ग्यात्मक एव कचभ्रामिः जटानां ग्रंथिविशेषः । वक्षः उरः दाक्षिण्यं दक्षिणास्वरूपं यस्य सः । मंत्रा एव स्फिक् कटिपार्श्वसंधिविशेषो यस्य सः इत्येवंरूपाणि विविधानि नानारूपाणि यानि मखकरणानि यज्ञांगानि तत्तनुकः तन्मूर्तिक इत्यर्थः तथाचोक्तं हरिवंशपद्मपुराणयोः परमशिवं प्रक्रम्य 'वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः ॥ अग्निजिह्वो धर्मरोमा ब्रह्मशीर्षो महातपाः ॥ अहोरात्रेक्षणो देवो वेदांतश्रुतिभूषणः॥ स्रुवतुंडश्चाज्यनासः सामघोषस्वनो महान् ॥ धर्मसत्यमयः श्रीमान्क्रमवि-क्रमसत्क्रियः ॥ प्रायश्चित्तनखो धीरः पशुजानुर्महाभुजः ॥ औद्गात्रांत्रो होमलिंगः फलबीजम-हौषधीः ॥ वाय्वंतरात्मा मंत्रस्फिग्विकृतः सोमशोणितः ॥ वेदीस्कंधो हविर्गंधो हव्यकव्यातिवेगवा-न् ॥ प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरार्चितः ॥ दक्षिणाहृदयो योगी महामंत्रमयो महान् ॥ उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्तभूषणः॥ नानाछंदोगतिपथो गुह्योपनिषदासनः॥ छायाफली सहायो वै मेरुशृंगमिवोत्थितः' इति। भुजंगविजृंभिताख्यं वृत्तमिदं तथाच पैंगलसूत्रं 'भुजंगविजृंभितं मौत्नौ सौ लगौ वसुरुद्रऋषयः' तथाच केदारे लक्ष्यं 'वस्वीशाश्वछेदोपेतं ममतनयुगनरसलगैर्भुजंगविजृंभितम्' इति । प्रतिपाद मगणद्वयं तगणः नगणत्रयं रगणः लघुगुरुश्च अष्टाभिरेकादशभिः सप्तभिश्च यदि यतिरित्येतद्वृत्तं भुजंगविजृंभिताख्यं भवतीत्यर्थः ॥ ५०॥

## ॐ सोमाय नमः ।

मूर्तिष्वष्टास्वीश तवैका रजनीशो ज्योतिष्टोमस्तस्य हविश्चेडविडश्च ॥
सौराष्ट्रस्थस्त्वं शिवगंगायपुनस्थो गौर्या साकं नित्यविहारीति च सोमः ॥ ५१ ॥

मूर्तिष्विति अष्टमूर्तिषु । चंद्रात्मकत्वाज्ज्योतिष्टोमात्मको यः क्रतुविशेषस्तत्र सोम इति प्रसिद्ध-त्वाद्वा तत्साधनीभूतं च यद्धविर्हूयमानसोमरसात्मकद्रव्यविशेषस्तदात्मकत्वाद्वा एवंविधः कुबेरस्त-दात्मकत्वाद्वा सौराष्ट्राख्यो यो देशविशेषस्तत्र सोमनाथ इतिप्रसिद्धत्वाद्वा गंगायमुनयोर्यत्र संगमस्त-द्देशे विराजमानत्वाद्वा उमया सह वर्तमानत्वाद्वा सोमत्वं परमशिवस्येत्याह। रजनीशः सोमः अंशा-शिनोरभेदात् । स्वांशभूतसोमसूर्यात्मकत्वमस्येति भावः । 'यज्ञो वै विष्णुः ' इत्यादिश्रुतेर्ज्योतिष्टो-मात्मकत्वं तस्य सोमरसस्यापि परमशिवात्मकत्वं हविष्ट्वात् । स्कांदे सनत्कुमारसंहितायां काशीग-तदाल्भेश्वरलिंगप्रस्तावे प्रतिपादितं ' मतीनां च दिवः पृथ्व्या वन्हेः सूर्यस्य वज्रिणः ॥ साक्षाद-पि च विष्णोश्च सोमो जनयितेश्वर ' इति । इदं च ' सोमः पवते जनिता मतीनाम् ' इत्यृच उपबृं-हणम् । क्वचि तु पूयमानत्वेन सोमस्य कीर्तनात्सोमरसस्य शिवात्मकता कुबेरस्यापि सोमत्वं मंत्रतंत्रे प्रतिपादितं गौर्या साकमित्यनेन योगार्थः प्रदर्शितः । एतेन व्यष्टिसमष्ट्यात्मकं निखिलवस्तुरूपं परमशिवस्येत्युक्तं भवतीत्यर्थः । श्रुतिप्रसिद्धं चेदं नाम ' नमः सोमाय च रुद्राय च ' इति । मत्तमयूराख्यं वृत्तमिदम् । तथा च वृत्तरत्नाकरे लक्ष्यं ' वेदै रंध्रैर्म्तौ यसगा मत्तमयूरम् ' । मगणः तगणः यगणः सगणः गुरुश्चेति मत्तमयूराख्यं भवतीत्यर्थः ॥५१॥

## ॐ पंचवक्त्राय नमः ।

सर्वेशब्रह्मतत्त्वेंद्रियविषयकलाभूतसादाख्यमूर्ति-
ष्वेकैकश्येन पंचात्मसु तव वदनेष्वादिहीनेषु सत्सु ॥
योऽयं मुंदोपसुंदासुरहननिमित्ताप्सरस्तल्लजेक्षाः
प्रादुर्भावः स तद्वक्त्यतिरभसकृते. जायथाः पंचवक्त्रः ॥ ५२ ॥

ऊर्ध्वादिभेदेन पंच वक्त्राणि यस्येत्यर्थः । सर्वेशेति ब्रह्माणि च तत्वानि चेंद्रियाणि च विषया-श्च कलाश्च भूतानि च सादाख्याश्च मूर्तयश्चेति द्वंद्वः । एकैकश्येन एकैकशः प्रत्येकं प्रेत्यकमि-तियावत् । पंचात्मस्विति ईशानतत्पुरुषाघोरवामदेवसद्योजाताख्यानि पंच ब्रह्माणि पुरुषप्रकृतिबुध्य-हंकारमनोज्ञानेंद्रियविषयाः वचनादानगमनविसर्गानंदाख्याः पंच कर्मेन्द्रियविषयाः निवृत्तिप्रवृत्ति विद्याशांतिशांत्यतीताख्याः पंच कलाः पृथिव्यप्तेजोवाय्वाकाशाख्यानि पंच भूतानि शिवसादा-ख्यमूर्तसादाख्यकर्तृसादाख्यकर्मसादाख्यानि पंच सादाख्यानि । ब्रह्माविष्णुरुद्रेश्वरसदाशिवाख्याः पंच मूर्तयश्चेति पंच पंचात्मकानि वदनानि चेत्यर्थः । तदुक्तं वायवीयसंहितायाम् ' अथान्या-श्चापि तनवः पंच ब्रह्मसमाव्हयाः ॥ तनुभिस्ताभिरख्यातमिह किंचिन्निवियते ॥ ईशानः पुरुषो घोरो वामः सद्यस्तथैवच ॥ ब्रह्माण्येतानि देवस्य मूर्तयः पंच विश्रुताः ॥ ' इति ' ब्रह्मा विष्णुस्तथा रुद्रो

महादेवः सदाशिवः ॥ मूर्तयस्तस्य विज्ञेया याभिर्विश्वमिदं ततम् ' इत्यादि । तथा चैकात्मकेषु तव वदनेष्वनादिभूतेष्वपि सत्सु योऽयं सुंदोपसुंदाख्यासुरहननार्थं विश्वकर्मणा निर्मिताया अप्सरस्तिलोत्तमाख्यायास्तस्याः सौंदर्यातिशयेन जगन्मात्रसंमोहिकाया दिदृक्षातः प्रादुर्भावस्त्वदीयः स तद्भक्त्युद्रेकमात्रप्रयुक्तो नत्वन्यार्थ इत्यर्थः । तिलोत्तमादिदृक्षाप्रयुक्तमुखबाहुल्यसृष्टिश्चानुशासनिके उमामहेश्वरसंवादे प्रपंचिता यथा ' उमोवाच । भगवन्देवदेवेश सर्वदेवनमस्कृत ॥ चतुर्मुखो वै भगवानमवस्केन हेतुना ॥ भगवन्केन ते वक्त्रमैंद्रमद्भुतदर्शनम् ॥ उत्तरं चापि भगवन्पश्चिमं शुभदर्शनम् ॥ दक्षिणं च मुखं रौद्रं केनार्थं जटिलावृतम् ॥ यथादृशं महादेव श्रोतुमिच्छामि कारणम् ॥ एष मे संशयो देव तन्मे शंसितुमर्हसि ॥ महेश्वर उवाच ॥ तदहं ते प्रवक्ष्यामि यस्त्वमिच्छसि भामिनि ॥ पुरा महासुरौ घोरौ लोकोद्वेगकरौ भृशम् ॥ सुंदोपसुंदनामानावासतुर्बलगर्वितौ ॥ अशस्त्रवध्यौ बलिनौ परस्परजयेषिणौ ॥ तयोरेव विनाशाय निर्मिता विश्वकर्मणा ॥ सर्वतः सारमुद्धृत्य तिलशो लोकपूजिता ॥ तिलोत्तमेति विख्याता अप्सरा सा बभूव ह ॥ देवकार्यं करिष्यंती हावभावसमन्विता ॥ मां तु पश्यंतमायाता रूपेणाप्रतिमा भुवि ॥ मया बहुमता चेयं देवकार्यं करिष्यति ॥ इति मत्वा तदा चाहं कुर्वतीं यां प्रदक्षिणम् ॥ तथैव ता दिदृक्षुश्च चतुर्वक्त्रोऽभवं प्रिये ॥ रौद्रं मुखमिदं पूर्वं तपश्चर्यापरं सदा ॥ दाक्षिणं मे मुखं दिव्यं रौद्रं संहरति प्रजाः ॥ लोककार्यकरं नित्यं पश्चिमं मे मुखं प्रिये ॥ वेदानधीते सततं चाद्भुतं चोत्तरं मुखम् ॥ एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ' ॥ रूपेणाप्रतिमा सेयं तिलोत्तमा पश्यंतं मामागम्य उपसृत्य प्रदिक्षणं कुर्वती अतएव मया बहुमता च सती देवकार्यं करिष्यतीति मत्वा तदाहमनेकमुखेन स्थित इत्यध्याहारेण वाक्यपूरणम् । तथैव यथा मया चिंतितं तथैव मामुपसृत्य प्रदक्षिणीकृत्य मत्प्रसादबलेन देवकार्यं साधयितुं प्रवृत्तां ता दिदृक्षुः द्रष्टुमिच्छुश्चतुर्वक्त्रो भवामीत्यर्थः । एतेन अप्राकृतसौंदर्यनिधानभूतां पराशक्तिमेव साधनीकृत्य प्रवृत्तेन साक्षान्मदनेनापि चालयितुमशक्यस्य ज्ञानवैराग्यतपःसत्यादिदिव्यगुणगणालंकृतस्य भगवतः परमशिवस्य प्राकृतसौंदर्यातिशयशालिन्या तिलोत्तमाया या दिदृक्षा सा तद्भक्त्यतिशयमात्रयुक्तेति भक्तपारवश्यं निसर्गसिद्धमित्येतत्सूचितम् । एवंच सुंदोपसुंदाख्यौ यावसुरौ तयोर्हननिमित्ताचद्वधहेतुभूता या अप्सरस्तलजा प्रशस्ता अप्सरास्तिलोत्तमाख्या तल्लजेत्यप्सरोविशेषणम् । सौंदर्यवती तदीया या ईक्षा ईक्षणं तत्प्रयुक्तः प्रादुर्भावः तत्कृते तदर्थः अजायथाः जातोऽसीत्यर्थः इति । स्रग्धराख्यं वृत्तमिदं तथा च पैंगलसूत्रं ' स्रग्धरा म्रौ भ्नौ यो यौ त्रिः सप्तकः । ' तथा च वृत्तरत्नाकरे लक्ष्यं ' म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ' इति । प्रतिपादं मगणः रगणः भगणः नगणः यगणत्रयं च सप्तभिः सप्तभिश्च पादे यतिरित्येतद्वृत्तं स्रग्धराख्यं

# ॐ सदाशिवाय नमः ।

यो विधीश्वरदशा सदाशिवः तादृशोऽपि खलु यः सदाशिवः॥
तस्य कालकलना कुतस्तदस्त्यौपचारिकतया सदाशिवः ॥ ५३ ॥

सार्वकालीनः शिवः सदाशिव इत्यर्थः । नन्वर्थकालकृतपरिच्छेदशून्येऽस्मिन्परमशिवे सार्वकालीनत्वप्रतिपादकं सदेतिविशेषणमव्यावर्तकत्वादनुपादेयमेवेत्याशंक्य तद्व्यावृत्तिं प्रदर्शयन्भक्तिमार्गेण तथा प्रयोगः परमाशिव इति प्रदर्शयति यो विधीश्वर इत्यादिना विधीश्वरइत्यायंतग्रहणाद्विष्णुरुद्रयोः समुच्चयः । तथा च ब्रह्माविष्णुरुद्रेश्वराणां चतुर्णामपि मूर्तीनामसमानकालीनत्वात्पंचमी सदाशिवाख्या मूर्तिस्तस्याअपि असमानकालीनत्वम् । परमशिवः सदाशिव इति गौणप्रयोगः। एवं ब्रह्मादीनां पञ्चानामपि असमानकालीनत्वमुत्तरोत्तरस्य पूर्वपूर्वापेक्षया चिरकालवर्तित्वं परमशिवस्य कालानवच्छिन्नत्वं च प्रतिपादितं शिवपुराणे सृष्टिप्रकरणे केन मानेनास्मिन्काले आयुःसंख्या प्रवर्तते इति पृच्छतः ऋषीन्प्रति वायुवचनम् ‘ आयुषोऽत्र निमेषाणां गणनान्मानमुच्यते ॥ अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तितः ॥ तादृशानां निमेषाणां काष्ठा तु दश पच च › इत्यारभ्य ‘ चतुर्युगसहस्रं यत्तत्कल्प इति कथ्यते › इति कल्पमानमुक्त्वा पुनर्वर्णितं ‘ कल्पो नाम दिवा प्रोक्तं ब्रह्मणो व्यक्तजन्मनः ॥ कल्पानां वै सहस्रं तु ब्रह्मवर्षमिहोच्यते ॥ वर्षाणामष्टसाहस्रं यदेतद्ब्रह्मणो युगम् ॥ सवनं युगसाहस्रं ब्रह्मणः पद्मजन्मनः ॥ सवनानां सहस्रं तु त्रिविधं त्रिगुणं तथा ॥ कल्पते सकलः कालो ब्रह्मणः परमेष्ठिनः ॥ तस्य वै दिवसे याति चतुर्दश पुरंदराः ॥ ब्रह्मा विष्णुदिने चैको विष्णू रुद्रदिने तथा ॥ ईश्वरस्य दिने रुद्रः सदाख्यस्य तथेश्वरः ॥ साक्षाच्छिवस्य तत्संख्या तदा सोऽपि सदाशिवः । तस्मिन्साक्षाच्छिवे नैव कालात्मा सम्प्रवर्तते › इति । अत्र चायमर्थः कल्पसहस्रमेको वत्सरः तादृशवत्सराणामष्टसहस्राण्येकं युगं तादृशयुगसहस्रमेकं सवनं तादृशसवनानां नवसहस्री ब्रह्मणः परमायुः विष्णोरेकदिनं तादृशपरमायुः रुद्रस्य तादृशरुद्रपरमायुः महेश्वरस्य तादृशमहेश्वरपरमायुः सदाशिवस्य एकं दिनमिति सर्वत्र सबध्यते। परमशिवस्य तु कालकलनाविरहादेकं दिनमिति व्यवहारमात्र इत्यर्थः । अतएव तत्रैव देशान्तरे ‘ कालावच्छेदभेदेन गुरूणामप्यसौ गुरुः ॥ सर्वेषामेव सर्वेशः कालावच्छेदवर्जित इति । योगसूत्रमपि ‘ सर्वेषामपि गुरुः कालेनानवच्छेदात् › इति । तथा ‘ अहर्न विद्यते तस्य न रात्रिरिति धारयेत् ॥ उपचारस्तु क्रियते लोकानां हितकाम्यया › इति तस्येति । एतादृशस्य तव कालकलना कालकृतपरिच्छेदः कुत इत्युपचारमात्रेण परमशिवे सदाशिवेतिप्रयोगो लोकानामित्यर्थः । इदं तु श्रुतिप्रसिद्धं नाम ‘ ब्रह्मा शिवो मे अस्तु सदाशिवोम् › रथोद्धताख्यं वृत्तमिदं तथा च पैंगलसूत्रं ‘ रथोद्धतार्नौलौंग् ›। तथा च वृत्तरत्नाकरे ‘ रोनराविह रथोद्धता लगौ › इति । प्रतिपादं रगणः नगणः रगणः लघुर्गुरुश्चेतद्वृत्तं रथोद्धताख्यं भवतीत्यर्थः ॥ ५३ ॥

## ॐ विश्वेश्वराय नमः ।

केवलं चिन्मयज्योतिरात्मैव काशी तेन सर्वाणि विश्वान्यतीतापि विश्वम्॥
तत्र वासात्परिच्छेदबुद्ध्या गृहीतः काशिकाधीश्वरोऽपीश विश्वेश्वरस्त्वम् ॥ ९ ॥

विश्वेषामीश्वरः विश्वेश्वर इत्यमुमर्थं, प्रसिद्धिपूर्वकमुपपादयति केवलमित्यादिना चिन्मय-ज्योतिश्चित्प्रकाशात्मिका केवलमात्मस्वरूपैव काशीत्युच्यते तेन सर्वाणि विश्वान्यतीतापि अखिल-प्रपंचातिक्रांता सा विश्वमितिव्यवहारविषय एव । विश्वब्रह्मणोरनन्यत्वादिति भावः । तत्र तादृश्यां पुरि निवसनात्परिच्छेदबुद्ध्या काशिकाधीश्वर इति परिगृहीतोऽपि परमार्थबुद्ध्या विश्वेश्वर एव ब्रह्मसार्वात्म्यस्य श्रुतिस्मृतिप्रसिद्धत्वेन तदात्मिकाया पुर्या निवसितुरप्युपपन्नं विश्वेश्वरत्वमिति भावः । स्पष्टमन्यत् । विश्वाख्यं वृत्तमिदं तथाचोक्तमभियुक्तैः 'रैश्चतुर्भिर्युतं येन युक्तं च विश्वम्' इति प्रतिपादं रगणचतुष्टयं गुरुश्चैतद्वृत्तं विश्वाख्यं भवतीत्यर्थः ५४ ॥

## ॐ वीरभद्राय नमः ।

श्रीगौर्य्या वीरः स्वीकृतः पुत्रबुद्ध्या क्रोधाग्निस्वेदोत्पादितो भद्रनामा ॥
भद्रायोगाद्वा राजपूर्वासशालीस्तद्वांस्तद्रूपस्त्वं ततो वीरभद्रः ॥ ५५ ॥

वीर इति कश्चित्परमशिवपुरद्वारवर्ती गणविशेषः स च पराशक्त्या पुत्रत्वेन परिगृहीत इ-त्येतत्पद्मपुराणे प्रपंचितं यथा 'स एष वीरको देवि सदा मे हृदयप्रियः ॥ नानाश्चर्यगुणैर्द्वारि गणेश्व-र्येगणार्चितः' ॥ इत्यादितत्प्रशंसाश्रवणोत्तरं देवीवचनम् 'ईदृशस्य सुतस्यास्ति ममोत्कंठा पुरांतक ॥ कदाहमीदृशं पुत्रं द्रक्ष्याम्यानंददायकम्' शिव उवाच 'एष एव सुतस्तेऽस्तु नयनानंदहेतुकः ॥ त्वया पुत्रः कृतार्थः स्याद्वीरकोऽपि सुमध्यमे' इति । तथा च वीरश्च भद्रश्च वीरभद्रौ तावस्य स्त इति काशीखंडे प्रतिपादितं 'ततस्तत्कोपजाद्वह्नेराविरास महाद्युतिः ॥ भद्रस्तु प्रतिभाकारः कालमृ-त्युप्रकंपन' इति तथा च वीरश्च भद्रश्च वीरभद्रौ तावस्य स्त इति वीरभद्र इत्यर्थः । अथवा दक्षा-ध्वरहरणार्थं परमशिवोत्पादितस्य वीराख्यपराशक्त्युत्पादिता या भद्राख्या शक्तिस्तद्योगाद्वीर एव भद्र इत्याह भद्रायोगाद्वेति तदुक्तं वायवीयसंहितायां यथा 'दग्धुं दक्षाध्वरं विभा देवी देवमचोदयत् ॥ देव्या संचोदितो देवो दक्षाध्वरजिघांसया ॥ ससर्ज सहसा वीरं वीरभद्रं गणेश्वरम्॥ सहस्रवदनं देवं सहस्रचरणेक्षणम्॥ तथा 'मन्युना चासृजद्भद्रां भद्रकालीं महेश्वरीम् ॥ आत्मनः कर्मसाहित्या तेन गंतुं सहैव तु ॥ तं दृष्ट्वा उचितं वीर भद्रकालाग्निसंनिभम् ॥ भद्रया सहितं प्राह भद्रमस्त्विति शंकर' इति । तथा च वीरश्चासौ भद्रश्च वीरभद्रस्तद्वानित्यर्थः । राजपूः राजपुरं तत्र वस्तुं शीलमस्यास्तीति तद्वासशाली । राजपुरमि-त्रविशेषः । सांकराचलपरिसरे प्रसिद्धः । तद्वानिति द्वंद्वोत्तरं कर्मधारयोत्तरं वा मत्वर्थीयोऽस्य

त्ययययोगात्सिद्धस्तद्रूप इति । तथाच वीरभद्रोभयवत्वाद्वीराभिन्नभद्रवत्वाद्वा तद्वत्त्वं राजपुराख्यक्षेत्रविशेषे वीरभद्रेश्वर इतिप्रसिद्ध्या तत्स्वरूपत्वं चेत्यर्थ इति । अत्र च वीरभद्रावतारः कल्पभेदेन बहुधा प्रपंचितः । तथाहि ब्रह्मांडपुराणोत्तरभागे हयग्रीवागस्त्यसंवादे ललितोपाख्याने यथा ' आदिदेवो महादेवो ललाटानलसंभवः ॥ एकं स्वेदपयोबिंदुं नखाग्रेणाक्षिपत्क्षितौ ॥ तत उत्थितवानेको लोकघस्मरविग्रहः ॥ कालाग्निरिव दीप्तांगो वीरभद्रो गणेश्वरः ॥ वीरभद्रः स कैलासान्निर्जगाम महाजवः ॥ तस्यैव रोमकूपेभ्यो दीप्ताग्निटिललोचनात ॥ कर्णाभ्यां चैव नासाभ्यां आस्याद्भ्रूभ्र(?)यंकरात् ॥ प्रसृता बहवो लोकघस्मरा प्रमथेश्वरा ' इति । तथा वामनपुराणे ' क्रुद्धस्य सर्वगात्रेभ्यो निश्चेरुः सहसार्चिषः ॥ सह क्रुद्धा त्रिनेत्रास्यगात्ररोमांतरोद्भवाः ॥ गणासंख्यमुखा जाता वीरभद्र पुरोगमा ' इति । तथा वाराहपुराणेऽपि यथा ' शुश्राव याजिनां चोच्चैरिंद्रागच्छेति कीर्तितः ॥ ततः श्रुत्वा महातेजाः सर्वज्ञः परमेश्वरः ॥ चुकोप च भृशं देवो वाक्यं चेदमुवाच ह ' इत्यादिना दक्षाध्वरश्रवणजन्यपुनरुक्तं ' तस्याननात्ततो ज्वाला गात्रेभ्यो निर्ययुस्तदा ॥ ततो भूतानि वेताल उच्छुष्माः प्रेतपूतनाः ॥ कूष्मांडा यातुधानाश्च सर्वे प्रज्वलिताननाः ॥ उत्तस्थुः कोटिशस्तत्र नानाप्रहरणान्विताः ॥ एवं कृत्वा स सामग्रीं देवदेवः प्रतापवान् ॥ जगाम दक्षयज्ञाय क्रोधाद्रुद्रः प्रतापवान् ' इत्यादि ।एवमन्यत्रापि अन्यथा प्रपंचितं तच्च प्रकृतानुपयोगान्नेह संलिख्यत इति।वैश्वदेवीसंज्ञकं वृत्तमिदं तदुक्तं पैंगले' वैश्वदेवी मौ याविद्रिय ऋषयः ' । तथैव केदारे ' पंचाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ' इति । प्रतिपादं मगणद्वयं यगणद्वयं पंचभिः सप्तभिर्यतिरित्येतद्वृत्तं वैश्वदेवीसंज्ञकं भवतीत्यर्थः ॥ ५५ ॥

## ॐ गणनाथाय नमः ।

शशिकरगुणमुखसंख्यानां प्रमथतुषितमुख्यमुख्यानाम् ॥
अधिपतिरसि शिव कैलासे पुरि निवससि गणनाथस्त्वम् ॥ ५६ ॥

गणः संख्या ' गणनं गणना गण ' इति गणशब्दस्य संख्यावाचित्वात् । तथाच गणनानामेकत्वादिपरार्धपर्यंताना संख्यानां नाथो गणनाथ इत्यभिप्रेत्याह शशिकरेति शशी एकः करौ द्वौ गुणास्त्रयः । तथा च एकद्वित्रित्वमुखाः परार्धांता याः संख्यास्तासामित्यर्थः । अधिपतिरित्यग्रिमेण संबंधः अथवा नंदिभृंगिमहाकालप्रभृतयो ये प्रमथगणाः 'आदित्यविश्ववसववस्तुषितभास्वरानिलाः ॥ महाराजिकसाध्याश्च रुद्राश्च गणदेवता ' इति । तुषितमुख्या गणपदव्यवहार्या देवाः । मयरसतजभनसंज्ञाश्च मयादिगणास्तथा च गणानां प्रमथादीनां नाथो गणनाथ इत्यभिप्रेत्याह प्रमथेत्यादि । यद्यपि मयरसादेर्गणसंज्ञा छंदःसूत्रेषु न दृश्यते तथापि ' लः समुद्रागण ' इति सूत्रस्य द्विमात्रादिपणमात्रातानां गणसंज्ञाविधायकतापरत्वेन भाष्यवार्तिकादौ व्याख्यानाददोषः । अथवा परमशिवाष्टषष्टिक्षेत्रपरिगणनायां गणनाथस्य कैलासाख्यक्षेत्रवासित्वेन प्रतिपादनात्तथेत्याह कैलासेत्यादि

स्पष्टमन्यत् वृत्ताख्यं वृत्तमिदं तथा च पैंगला ' वृत्ता नौ स्गौग्' । तथाचोक्तमभियुक्तैः ' इह नन ससगयुतं वृत्तम् ' इति प्रतिपादं नगणद्वयं सगणः गुरुद्वयं चेत्तद्वृत्तं वृत्ताख्यं भवतीत्यर्थः ॥ ५६ ॥

## ॐप्रजापतये नमः

अंतरिक्षभूमिनाकसंस्थिता याः सहस्रशः सहस्रसंमिताः ॥

रुद्रनामिकाः प्रजाः सृजस्यतः स्थाणुनामको भवान्प्रजापतिः ॥ ९७ ॥

प्रजानां पतिः प्रजापतिरित्यभिप्रेत्याह अंतरिक्षेत्यादि भौमांतरिक्षदिव्याः रुद्रनामिकाः सहस्रसंख्याकाः याः प्रजाः ताः सहस्रशः सृजतीत्यर्थः । तथा च श्रुतिः ' सहस्राणि सहस्रशो ये रुद्राः अधिभूम्यां तेषां सहस्रयोजने वधन्वानि तन्मसि नमो रुद्रेभ्यो ये पृथिव्यां येंतरिक्षे ये दिवि येषामन्नं वातोवर्षमिषवः ' इत्यादि स्थाणुनामक इति तथा च वराहपुराणे गौरीविवाहप्रकरणे 'सर्गादौ ब्रह्मललाट उत्पन्नः प्रजापतीनामन्यतमः स्थाणुसंज्ञकः स एव प्रजाः सृष्टवान् । जले मग्नस्त्र चिरं स्थित्वा कालांतरे पुनर्जलादुत्तीर्य गणान्सृष्ट्वा तैः सहितो दक्षाध्वरं ध्वंसयामासेत्युक्तं यथा ' रुद्रक्रोधोद्भवो यस्तु पूर्वं मग्नो महाजले ॥ सहस्रार्कसमाकाशो निश्चक्राम जलाद्यदा' इति एवं प्रजापतेः स्थाणुनामकत्वमित्यर्थः । श्येनिकासंज्ञकं वृत्तमिदं तथा च पैंगले ' श्येनीर्जौलौग्' तथा च कैदारे ' श्येनिका रलौ रलौ गुरुर्यदेति ' प्रतिपादं रगणः जगणः रगणः लघुर्गुरुश्चैत्तद्वृत्तं श्येनिकाख्यं भवतीत्यर्थः ॥ ५७ ॥

'हिरण्यरेता दुर्धर्षो गिरीशो गिरिशोऽनघः ॥ भुजंगभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥ ।

एतानि नव नामानि निर्वक्ति ॥

## ॐहिरण्यरेतसे नमः

त्वद्वीर्ययोगेन भवेद्धिरण्यं यद्वाग्निरूपोऽस्यथवा जलार्थम् ॥

त्यक्तेन वीर्येण बभूव हैममंडं तदीशासि हिरण्यरेताः ॥ ९८ ॥

हिरण्यं रेतो यस्येति बहुव्रीहिः । रेतसि हिरण्यशब्दप्रयोगश्च तज्जनकत्वादित्यादिना । हिरण्यमिति रूपसंबंधनात् । ' आयुर्वै घृतम् ' इत्यादिवदित्यभिप्रेत्याह त्वद्वीर्ययोगेन भवेदिति । हिरण्यमिति पारदयोगेन हिरण्योत्पत्तिस्तु रसरत्नाकरादौ प्रसिद्धैव । ब्रह्माण्डपुराणेऽपि दानप्रकरणे यथा 'हिमवद्दुहिता पूर्वमुमानाम्नी पतिव्रता ॥ पूर्वजन्मनि सा चासीद्दक्षस्य तनया सती ॥ दक्षकोपात्तु तत्याज सती चात्मकलेवरम् ॥ हिमवद्दुहिता जज्ञे लोके गौरीति विश्रुता ॥ दत्ता तेनापि सा तस्मै प्रणिपत्य पिनाकिने ॥ विवाहं कारयामास विधिवद्दुहितुस्तथा ॥ वैवाहिकेन विधिना जुहावाग्नि पितामहः ॥ होमं च कुर्वतस्तस्य विकारो मान्मथोऽभवत् ॥ रूपं दृष्ट्वा ततो देव्या रेतः स्कन्नं महात्मनः ॥ पद्भ्यां च मर्दितं तेन बहुधा समपद्यत ॥ तत्रोत्पन्ना महात्मानो वालखिल्या

मरीचिपाः ॥ अग्नौ विशेषमपतत्तच्चाभूज्ज्वलनप्रभम् ॥ जाज्वल्यमानं तद्दीप्त्या चाग्निमध्यगतं यथा ॥ शशंसि रेततो देवा दृष्ट्वा पुत्रं विभावसोः ॥ जगृहुः शिरसा चैव भूषणत्वेन योजयत्। एवं सुवर्णमुत्पन्नमाग्नेयं ब्राह्मयमेव च ॥ पवित्रं परमं लोके सुवर्णेन समं क्वचित् ॥ न दृश्यते द्रव्यजातं तद्दानं भूषणं तथा ' इति । अथवा 'हिरण्यरेता दहनो हुतभुग्घव्यवाहन' इत्यमरादग्निस्वरूपत्वात्तथेत्याह । यद्वेति अग्निस्वरूप इति । तदुक्तं शिवपुराणे 'अहमग्निशिरोनिष्ठस्त्वं सोमशिरसि स्थिता ॥ अग्नीषोमात्मकं विश्वमावाभ्यां समधिष्ठितम्' इति हिरण्यशब्दः हिरण्यात्मना परिणतब्रह्मांडपरः तदेव रेतो यस्येति तथेत्यभिप्रायेणाह । अथवेति जलार्थेत्यादि पुरा हि रुद्रेण सर्गादावपः सृष्ट्वा तन्मध्यात्सृष्टस्य वीर्यस्य हेमात्मकब्रह्माडात्मना परिणतस्य स्कांदे सौरसंहितायां प्रदर्शितत्वात्। यथा 'निमूर्तीनां तु सर्गस्यानंतरं परमः शिवः ॥ शब्दादीनां तु भूतानामुत्पत्तिं कुरुते स्वयम्' इत्यादिना त्रिमूर्तिसर्गमुक्त्वा 'सदाशिवेश्वरो रुद्रस्तथा नारायणो विधिः॥ इतिनाम्ना प्रकीर्त्यते तेषु रुद्रः शिवाज्ञया ॥ पुरस्तादण्डसर्गस्य ससर्जादौ द्विधा पुनः ॥ अपामेकांशके विद्वान्स्वयं वीर्यमथासृजत् ॥ तदंडमभवद्धैमं सहस्रांशुसमप्रभम् ॥ तस्मिञ्जज्ञे स्वयं विष्णुर्ब्रह्मेशानसमन्वितः ॥ आपो नारा इति प्रोक्ताः सूक्ष्मास्ता मुनिसत्तमाः ॥ शिवस्य नरसंज्ञस्य यतः कार्याणि तास्ततः ॥ ता यदस्यायन प्रोक्तं तेन नारायणः स्मृतः । अंशोपाधिवशेनैव ब्रह्मेति परिकीर्तितः ॥ अपामंतरवस्थानान्नारायण इतीरित ' इति । जलार्थे त्यक्तवीर्येण हैममंडं बभूवेत्यर्थः ईशेति संबुद्धिः । शेषं सुगमम् । इंद्रवज्राख्यं वृत्तमिदं तथैव पैंगलसूत्रम् 'इंद्रवज्रा तौज्गौग्' तथा च वृत्तरत्नाकरे स्यादिंद्रवज्रा यदि तौ जगौ ग' इतिचोभयसंमतेन प्रतिपादं तगणद्वयं जगणः गुरुद्वयमित्येतद्वृत्तमिंद्रवज्राख्यं भवतीत्यर्थः ॥ ५८ ॥

## ॐदुर्धर्षाय नमः

कैलासे शिखरिणि पौलस्त्यप्रागल्भ्यं तृणसमतामाप ॥
एवं सत्यभिभवकारिकस्तस्मात्त्वं भवसि हि दुर्धर्षः ॥ ५९ ॥

दुःखेनापि धर्षयितुमशक्यो दुर्धर्षः कथमप्यलभ्यो दुर्लभ इति प्रयोगात्सर्वातिशयबलशालीत्यर्थं इत्यभिप्रेत्याह कैलास इत्यादिना । पौलस्त्यप्रागल्भ्यं पौलस्त्यस्य पुलस्त्यवंशोद्भवस्य दशाननस्य यत्प्रागल्भ्यमार्ष्यायं यावद्बलं तत्तृणसमता प्राप्तमित्यर्थः । को वा परमशिवपराभवकारी भवेन्न कोऽपीत्यर्थः । तथा च श्रुतिः 'न तत्समश्चाभ्यधिकश्च विद्यत' इति । स्पष्टमन्यत् । पणवाख्यं वृत्तमिदं तथा च पैंगले 'पणवो म्नौ य्गौ' । तथैव कैदारे लक्ष्य 'म्नौ्यौ्चेत्पणवकनामेदम्' इतिचोभयसंमतेन प्रतिपादं मगणः नगणः यगणः गुरुश्चेत्तद्वृत्त पणवाख्यं भवतीत्यर्थः ॥ ५९ ॥

## ॐगिरीशाय नमः

भूरिगणे पद्वाक्ये निष्कलुषे सुसमर्थः ॥
परतरादपि शंभो तेन मतोऽसि गिरीशः ॥ ६० ॥

गिरि वैदिकवाक्ये ईशः समर्थ इत्यभिप्रेत्याह सूरिगण इति । ईशइत्यस्य व्याख्यानं सुसमर्थ
इति । अथवा गिरीणां मेरुमंदरप्रभृतीनामीशः अधिपतिरिति तथेत्याह पर्वतराडपीति । पर्वताधि-
पत्यं च शिवस्य हरिवंशे धन्याश्चर्योपाख्याने नारदं प्रति पर्वतानां वचनेन दर्शितं यथा 'ब्रह्मर्षे
न वयं धन्या नाप्याश्चर्याणि संति नः । अस्माकमीश्वरः शूली गिरीशो वृषभध्वजः । नाश्चर्यो
वापि धन्यो वा तस्मात्परतरो भुवि' इति । चित्रपदाख्यं वृत्तमिदं तथा च पैंगलसूत्रं 'चित्रपदा
भौगौ' । तथा च वृत्तरत्नाकरे 'भौ गिति चित्रपदा गः' इत्युभय संमतेन प्रतिपादं भगणद्वयं
गुरुद्वयं चैतद्वृत्तं चित्रपदावृत्ताख्यं भवतीत्यर्थः ॥ ६० ॥

## ॐगिरिशाय नमः

मेरुपर्वतमपि धनुर्हेतवे कृशयसि तराम् ।
पर्वते निवससि सुखं नाथ तद्भवसि गिरीशः ॥ ६१ ॥

गिरिं मेरुपर्वतमपि श्यति चापार्थं तनूकरोतीति गिरिशः । अथवा गिरौ शेत इति गिरिशः ।
शयनं चात्र न प्राकृतं विवक्षितं किंतु सुखावस्थानात्मकमेवेत्याशयेनाह मेरुपर्वतमपीत्यादि ।
स्पष्टोऽप्यर्थः । इदं च श्रुतिप्रसिद्धं नाम । 'नमो गिरिशाय च' इति हलीमुखसंज्ञकं वृत्तमिदं तथा
च पैंगलसूत्रं 'हलीमुखीनौंस' । तथैव केदारे 'रान्नसाविह हलीमुखीति च' उभयसंमतेन प्रतिपादं
रगणः नगणः सगणश्चेत्तद्वृत्तं हलीमुखसंज्ञकं भवतीत्यर्थः । संज्ञात्वेऽपि पिप्पल्यादेराकृतिगणत्वान्ङीप्
भवतीति । 'नखमुखात्संज्ञायाम्' इत्यस्य न प्रवृत्तिः ॥ ६१ ॥

## ॐअनघाय नमः

दुःखं नाथ न ते पापं च व्यसनम् ॥ त्रैलोक्याधिपते तस्मादस्यनघः ॥ ६२ ॥

दुःखमिति । न विद्यते अघं पापं व्यसनं वा यस्मिन्सोऽनघः । 'मूल्ये पूजाविधावर्घो-
हो दुःखव्यसनेष्वघम्' इत्यमरात् । तथा च दुःखस्य पापजन्यत्वाद्व्यसनस्य दुःखजन्यत्वात्पूर्व-
पूर्वापाये उत्तरोत्तरापायात्त्रितयशून्यत्वमत एव त्रैलोक्याधिपतित्वं चेत्याशयेनाह दुःखं पापं व्यसनं
चेति त्रितयमपि यतस्तव न विद्यते अतस्त्वमनघो भवसीत्यर्थः । 'अयमात्मापहतपाप्मा विजरो
विशोक' इति 'हृत्पुंडरीकं विरजं विशुद्धं विचिंत्य मध्येविदं विशोकम् । अचिंत्यमव्यक्तमनंतरूपं
शिवं प्रशांतममृतं ब्रह्मयोनिम्' । इति । 'समस्तसाक्षिं तमसः परस्तात् इत्यादिश्रुतेः' । 'अचिंत्यो
निर्गुणो नित्यो निरवयो निरामयः ॥ निर्दुःखो निरहंकारो निर्गुणो नित्यो गणनायकः' ॥ इत्या-
द्यागमाच्चेति । 'स एव विष्णुः स प्राणः स कालाग्निः स चंद्रमाः ॥ स एव सर्वं यद्भूतं यच्च
भव्यं सनातनम्' । इत्यादिश्रुत्या सर्वात्मकत्वेन त्रैलोक्याधिपत्यस्य प्रतिपादितत्वादित्यर्थः । अन-
घाख्यं वृत्तमिदं तथाचोक्तमभियुक्तैः । 'मोसभ्रेद्नघ' इति । प्रतिपादं मगणः सगणश्चेत्तद्वृत्तमन-
... भवतीत्यर्थः ॥ ६२ ॥

## ॐ भुजंगभूषणाय नमः

अभिचारसमर्थदारुकावनगैः प्रहितानहीन् ॥

दधद्गरुडादपिबिभ्यतस्तनौ कथितोऽसि भुजंगभूषणः ॥ ६३ ॥

भुजकौटिल्ये इतिधातोः भुजाभ्यां गच्छतीति वा भुजं कुटिलं यथा भवति तथा गच्छंतीति वा भुजंगाः त एव भूषणं यस्येति भुजंगभूषणः । अभिचारेति अभिचारेष्वन्येषामनिच्छापादनेषु समर्थाः कृतबुद्धयो दारुकावनगास्तद्वासिनो मुनयस्तैः प्रेषितान् । अथवा गरुडाद्वैनतेयादपि बिभ्यतो भयाकुलितचित्ताश्चाहीन्सर्पविशेषान्वासुकीप्रभृतींस्तनावाभरणत्वेन स्वीकुर्वन्भुजंगभूषण इति प्रसिद्धो भवसीत्यर्थः । तथाचोक्तं स्कांदे । 'ततः पंचफणा नागा निश्वसंतो विषोल्बणाः ॥ शीघ्रमुत्थाय कुंडेभ्यः समाजग्मुर्महेश्वरम् ॥ तानुपादाय नागेंद्राञ्ज्वलितानुपशोभितान् ॥ दधाराभरणत्वेन तेनासीन्नागभूषणः ॥ अपरैरपि नागेंद्रैर्वासुकिप्रमुखैः शिवः ॥ वैनतेयभयात्प्राप्तैरलं चक्रे निजां तनुम्' इति । चारुहासिनीसंज्ञकं वृत्तमिदं तथा च पैंगलसूत्रम् । 'अयुक्चारुहासिनी' यस्यसर्वे पादा विषमलक्षणयुक्तास्तद्वैतालीयचारुहासिनीनाम । तथा वृत्तरत्नाकरे लक्षणम् 'अयुग्भवा चारुहासिनी' इति । प्रतिपादं षण्मात्रानंतरं रगणः लघुर्गुरुरेवं प्रकारेण समस्तपादेषु लक्षणं चेत्तद्वृत्तं चारुहासिनीनामकं भवति । अयुग्भवेत्यत्र लक्षणं नोक्तमित्याशंका चेत्तर्हि वैताल्याः प्रथमपादलक्षणमेवात्र पिष्टपेषणभीत्या केदारेण नोक्तमित्यर्थः ॥ ६४ ॥

## ॐ भर्गाय नमः

भर्ज्यते दुरितानां संदोहो यदवाप्त्यां ॥

गायत्रीप्रतिपाद्यस्त्वं तस्मादसि भर्गः ॥ ६४ ॥

भर्ज्यते दह्यंते पापराशयोऽनेनेति भर्गः सर्वपापनिवर्तक इत्यर्थः पाकार्थाद्भ्रज्जेतः करणे घञि 'भ्रस्जोरोपधयोः' इतिरमागमे च 'चोःकुः' इति कुत्वे च रूपमित्यभिप्रयेणाह भर्ज्यत इति यस्य परमशिवस्य अवाप्त्या प्राप्त्या दुरितानां संदोहाः समूहाः भर्ज्यंत इत्यन्वयः पापनिवर्तकत्वं परमशिवधर्मोत्तरे प्रसिद्धं यथा'छित्वा भित्वा च भूतानि हत्वा सर्वमिदं जगत् ॥ यजेदेकं विरूपाक्षं न स पापेन लिप्यते' इति । अथवा 'भर्गो देवस्य धीमहि'इतिश्रुतिप्रसिद्ध्या वा तथेत्याह गायत्रीति भर्गशब्दश्चायमकारात इत्यभिप्रायः ।अत एव माधवीये स्मृतिरत्नेऽपि यथा 'तदित्येतत्परं ब्रह्म ध्येयं सूर्यस्य मंडले ॥ भर्गः स साक्षात्कारेणाविद्या तत्कार्यदाहकः'इति योगयाज्ञवल्क्येअकारांत एव भर्गशब्दः प्रयुक्तः यथा 'देवस्य सवितुर्मध्ये यो भर्गो नो धियः क्रमात् ॥ प्रचोदयाद्वरेण्यं तद्धीमहीत्यन्वयक्रमात्' इति अत एव मैत्रायणीशाखायां गायत्र्यर्थनिरूपणावसरे एव 'रुद्रो भर्गात्मकः' इति श्रूयते गायत्रीप्रतिपाद्यत्वं च परमशिवस्य प्रतिपादितं चादित्यपुराणे यथा 'गायत्र्याः परमं तत्वं देवदेवो महेश्वरः ॥ इति ध्यात्वा जपेद्विद्वान्गायत्र्याः फलमश्नुते' इति । कौर्मे राजवंशानुकीर्तने यथा 'राजावसुमनास्तत्र राजि-

मंडलमध्यगम्। समुपासिष्ट गायत्र्याः पुरुषं रुक्मविग्रहम् ॥ अनुग्रहार्थं तस्याथ भगवान्परमः शिवः॥
आविर्भूय रवेर्बिंबादस्मै रूपमदर्शयत् ॥ शिवशक्तिमयं दिव्यं चंद्रार्धकृतशेखरम ॥ त्रिलोचनं नील-
कंठं ब्रह्मेंद्रोपेंद्रवंदितम् ॥ अनुगृह्य च तं कालं देहाते तां निजं पदम् ॥ तुष्टाश्वरंतरंतस्य गायत्र्या-
राधनादिभिः' । इति 'यो देवः सवितास्माकं धियो धर्मादिगोचरे ॥ प्रेरयेत्तस्य भर्गस्तु तद्वरेण्यमुपा-
स्महे ' इतिस्मृत्यंतराश्रयणे तु प्रकृतेऽपि सांतमेव नामास्तु । मदलेखाख्यं वृत्तमिदं तथा चोक्तं
केदारे ' म्सौगः स्यान्मदलेखा ' इति । प्रतिपादं मगणः सगणः गुरुश्चेत्तद्वृत्तं मदलेखाख्यं भवती-
त्यर्थः ॥ ६४ ॥

## ॐगिरिधन्वने नमः

वाग्विषये त्वं मेरुरिव भवसि त्वां तु मनागभिदति न वचो
दिव्यरथे वा पुरदहनविधौ वेदमयाः किल चतुरतुरंगाः ॥
चक्रयुगं ते दिनरजनिकरौ बाणशरीरभृद्भवदुपेंद्रो
मेरुरभूत्ते धनुरुरगपतिर्ज्याभवदीश तदसि गिरिधन्वा ॥ ६५ ॥

गिरीति । गीः शब्दः सम्यंतः धन्वशब्दश्च मरुवाचकः । प्रथमांतस्तथा च असमस्तं
पदद्वयमेकं नामेत्यभिप्रेत्याह वाग्विषय इति यतस्त्वां मनागपि वाचो नाभिदधति अतस्त्वं मरुरिव
निर्जलदेशविशेषवन्मनोवाचामगोचरो भवसीत्यर्थः । ' यतो वाचो निवर्तंते अप्राप्य मनसा सह '
इतिश्रुतेः । अथवा गिरिः सुमेरुर्धन्वा धनुरात्मको यस्येति बहुव्रीहिः । पुरा हि त्रिपुरदहनाव-
सरे दिव्यरथमधिरोहति परमशिवे सुमेर्वादीनां धनुराद्याकारेण स्वरूपाविर्भाव इत्यस्य तत्तत्पुराणा-
दिषु स्पष्टं प्रतिपादितत्वात् । इत्याशयेनाह दिव्यरथे वेत्यादि । चतुरतुरंगाः मनोऽतीतवेगा
तिशयास्तुरंगमाः ते च वेदमयाः वेदात्मकाः किलेति प्रसिद्ध्यर्थकमव्ययं सर्वत्रान्वेति दिनरज-
निकराविति दिनकरो रजनिकरश्चेति सूर्यसोमात्मकं रथचक्रद्वयमित्यर्थः । बाणशरीरेति ।
बाणात्मकतया शरीरं बिभर्तीति यथा उपेन्द्रो विष्णुः मेरुरिति धन्वाकारेण मेरुरभत् ॥ उरग-
पतिरिति धनुषः कोटिद्वयानुस्यूतसूत्रात्मना सर्पराडभवदित्यर्थः । तथा च वेदाश्वे पुष्पवच्चके
शरोपेन्द्रे धनुर्गिरौ ॥ स्थित्वा रथे ददाहाशु त्रिपुरं त्रिपुरार्दन ' इति । तदुक्तं लैंगे यथा ' अथ
रुद्रस्य देवस्य निर्मितो विश्वकर्मणा ॥ सर्वलोकमयो दिव्यो रथो यत्नेन सादरम् ॥ सर्वभूतमय-
श्चैव सौवर्णः सर्वसंमतः॥ रथांगं दक्षिणं सूर्यो वामांगं सोम एव च ॥ दक्षिणं द्वादशारं हि
षोडशारं तथोत्तरम् ॥ आरेषु तेषु विप्रेंद्रा आदित्या द्वादशैव तु ॥ शशिनः षोडशारेषु कला
वामस्य सुव्रता' इति । एवं शैलेंद्रः कार्मुकस्तस्य ज्या तस्य भुजगाधिपः ॥ ( ? ) स्वयं कल्पित
विग्रहः ॥ कालाग्निसदृशश्चैव साक्षाच्चाह्नः सुदारुणः ॥ एवं कृतरथं दिव्यं कार्मुकं सशराकि-
तम् ॥ सारथिर्जगतां चैव ब्रह्माणं प्रभुरीश्वरः ॥ आरुरोह रथं युक्तं रणमंडनसंभ्रमम् ' इति ।
इदं च तन्वीसंज्ञकं वृत्तं तथा च पैंगलसूत्रं ' तन्वी भ्तो नसौ भो न्यौ द्विरादित्यैः ' । प्रति-

पाद भगणः तगणः नगणः भगणद्वयं नगणः यगणश्चेति द्वादशभिर्द्वादशभिश्च यतीरित्येतद्वृत्तं तन्वीसज्ञकं भवतीत्यर्थः । तथा च केदारे ' भूतमुनीन्द्रियैर्यतिरिहभतनाः स्भौनयया श्च यदि भवति तन्वी ' इति प्रतिपादं पूर्ववद्गणाः पंचभिः सप्तभिर्द्वादशभिर्यतिरिति ॥ द्विरादित्या इत्यपहायेंद्रियस्वरमासादिति प्रतीच्याः पठंति । अग्निपुराणे च तथोपबृंहणं दृश्यते तत्पक्षे न प्रकृतश्लोके यतिभंगः ॥ ६५ ॥

## ॐगिरिप्रियाय नमः

प्रेम भूरि ते विभाति वैदिकस्तवात्मवाचि ॥
सर्वपर्वतेष्वपीति नामतो गिरिप्रियोऽसि ॥ ६६ ॥

गिरि वैदिकस्तुत्यात्मिकायां वाचि प्रियः अत्यतं प्रीतिमान् । तथा च असमस्तं पदद्वयमेकं नाम अथवा गिरयः कैलासमेरुमंदारादयः पर्वताः प्रियाः प्रीतिविषया यस्येति बहुव्रीहिरित्यभिप्रेत्याह प्रेमेत्यादि । वैदिकस्तवात्मिकायां वाचि मेरुमदरायात्मकपर्वतेषु च यतस्तव प्रीतिरधिका-अतस्त्व नामतः गिरिप्रिय इति प्रसिद्धो भवसीत्यर्थः । समानिकासंज्ञकं वृत्तमिदं तथा च पैंगलसूत्र ' ग्लितिसमानीति' प्रतिपादमष्टाक्षरपादेषु विषमाक्षराणि प्रथमादिसप्तमातानि गुरूणि समाक्षराणि द्वयाद्यष्टमांतानि लघूनि यत्र भवन्ति तत्समानी संज्ञकं भवतीत्यर्थः । नव्यमतेऽस्य सूत्रस्य गद्यपरत्वेऽपि गरुडपुराणोक्तपद्यलक्षणमिह संगमनयि तथाच केदारे लक्ष्यं ' जौ समानिकगलौच ' इति । रजगणौ गुरुलघुचेति प्रसिद्ध प्रतिपादितम् ॥ ६६ ॥

मूलम् ।

कृत्तिवासाः पुरारातिर्भगवान्प्रथमाधिपः ॥ मृत्युंजय. सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः ॥
एतानि नामानि निर्वक्ति ॥

## ॐकृत्तिवाससे नमः

वाराणस्यां शिव त्वद्भक्तांस्तुदंतं गजेंद्रं विमात्सृष्टाभिचारव्याघ्रं च शूलेन हत्वा ॥
चर्मद्वंद्वं तदीयं प्रावृत्य विभ्राजमानोऽस्येकाम्रे चंद्ररेखामौले ततः कृत्तिवांसाः ॥६७॥

कृत्तिः गजचर्म व्याघ्रचर्म वा वासो वसन यस्येति कृत्तिवासाः । तदेव प्रदर्शयति वाराणस्यामित्यादिना पुरा ह्यानंदकाननवासाच्छिवभक्तान्प्रपीडितुमाविर्भूत गजाकारमसुरं तथा दारुकावनगतमुनिकृताभिचारोत्पादितं व्याघ्रच शूलेन हत्वा तदीय चर्मद्वयमपि परिधाय विशेषेण प्रकाशमानः परमशिव इत्यर्थः । तथाचोक्त स्कंदे ' वाराणस्या पुरा यातो गजरूपो महासुर' ॥ तपसान्शिवभक्ताश्च निहतुं कोपदीपितः ॥' इत्युपक्रम्य ' हत्वा त कुजरं भीममधृष्यं दिग्गजैरपि ॥ पादहस्तरतं चर्म विशस्याच्छिद्यते नवैः ॥ प्रावृत्यात्मानमात्मेशस्तूयमानोऽखिलैः सुरैः ' इति । ' तथा व्याघ्रो महाक्रुद्ध आजगाम नखायुधः ॥ तेषामृषीणा मर्मस्यकोपोऽय निर्गतो यथा ॥

तं चादाय त्वचं भित्वा तथा चर्मांबरोऽभवत् ॥ शुशुभे चर्मणा तेन नानावर्णयुतेन च ' इति ।
तुदंतं पीडयंतम्। एकाम्रेति क्षेत्रविशेषः। ' एकाम्रे कृत्तिवाससम् ' इतिपरमशिवाष्टषष्ठिक्षेत्रमध्ये
परिगणनात्। चंद्ररेखामौले इति संबुद्धिः। शिष्टं स्पष्टार्थम। इदं तु श्रुतिप्रसिद्धं नाम ' प्राणे-
श्वरः कृत्तिवासाः पिनाकी ' चंद्रलेखाख्यं वृत्तमिदं तथा च पैंगलसूत्रानुसारिण आहुः ' म्रौ म्यौ
यौ भवेतां सप्ताष्टभिश्चंद्रलेखा। ' प्रतिपादं मगणः रगणः मगणः यगणद्वयं चेति सप्तभिरष्टाभिश्च
प्रतिपादं यतिरित्येतद्वृत्तं चंद्रलेखाख्यं भवतीत्यर्थः ॥ ६७ ॥

## ॐपुरारातये नमः

भवान्पूर्वमाभाति पश्चादिदं जगद्भाति यद्वा पुराणामरिः ॥
तनोः कारणस्थूलसूक्ष्मात्मनो विनाशेन वा ते पुरारातिता ॥ ६८ ॥

पुरा आदौ राति आदत्ते प्रकाशत इति पुरारातिः पुरा प्रथमकालिकी रातिर्यस्येति विग्रहः
आदानस्य प्रकाशनस्वरूपत्वात्। 'तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः
'यच्चंद्रमसि यच्चाग्नौ तत्तेजो विध्दि मामकम्' इत्यादिस्मृतेश्चेत्यभिप्रेत्याह भवान्पूर्वमिति त्वत्प्रकाश
विषयीभूतमिदं जगदित्यर्थः। अथवा पुराणां कांचनराजतलोहमयानां पूर्वोपदर्शितनगरविशेषाणां
स्थूलसूक्ष्मकारणात्मकशरीरविशेषाणां वा अरातिर्नाशक इति पुरारातिरित्यभिप्रेत्याह यद्वेति स्पष्टोऽ
र्थः। मंदाकिनीसंज्ञकं वृत्तमिदं तथाचोक्तमभियुक्तैः 'त्रिभिर्यैर्लगाभ्यां मंदाकिनी' इति। प्रतिपादं
यगणत्रयं लघुर्गुरुश्चेत्तद्वृत्तं मंदाकिनीसंज्ञकं भवतीत्यर्थः ॥ ६८ ॥

## ॐभगवते नमः

पराक्रममती विरागयशसी श्रिया सह जगत्पतित्वमिति षद् ॥
गुणा भगपदोचितास्त्वयि वसंत्यतः श्रुतिगिरेरितोऽसि भगवान् ॥ ६९ ॥

भगोऽस्यास्तीति भगवानित्यत्र भगपदार्थमुपवर्णयति पराक्रमेत्यादि। पराक्रमश्च मतिश्चेति
द्वंद्वः। विरागश्च यशश्चेत्यपि द्वंद्वः। 'नाशिकास्तनयोर्नाडीमुष्ट्योः' इतिनिर्देशेनाल्पाच्तरचिसंज्ञयोः
पूर्वनिपातस्यानित्यत्वात्। श्रुत्युक्तं जगत्पतित्वं चेति षड्गुणाः भगपदप्रतिपाद्याः। ते चास्मिन्संती
ति भगवांस्तत्र पराक्रमो वीर्यं तच्च शरभभैरववीरभद्रायवतारादिषु प्रसिद्धं 'क्षयद्वीराय प्रभरामहे म-
तिम्' इत्यादिश्रुतिप्रसिद्धम्। मतिः यावद्वस्तुविषयकज्ञानं तथा च श्रुतिः 'यः सर्वज्ञः सर्वविद्यस्य ज्ञान-
मयं तपः' विरागः सर्वत्रौदासीन्यं तच्च 'न तस्य कारणं च विद्यते न तत्समश्चाप्यधिकश्च' इत्यादिश्रु-
तिप्रसिद्धं यशः कीर्तिः सकलजनस्तुतिविषयत्वमिति यावत्। तथा च श्रुतिः 'नमः श्लोक्याय च व-
सान्याय च' इति। 'तस्य नाम महयश इति भारतेऽपि। 'यं विष्णुरुद्रः शंभुश्च ब्रह्मा लोकपितामहः॥
स्तुवंति विविधैः स्तोत्रैर्देवदेवं महेश्वरम्॥ तमर्चयंति ये शश्वद्दुर्गाण्यतितरंति ते' इति। श्रीः उमा
तद्वत्त्वं च 'उमासहायं परमेश्वरं विभुम्' इतिश्रुतिप्रसिद्धं जगत्पतित्वं 'सर्वैश्वर्यसंपन्नः सर्वेशः शंभुरा-

का शमध्य' इतिश्रुतेः। एवं प्रमाणसिद्धाः षड्गुणाः तथाचोक्तं विष्णुपुराणे 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ॥ ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरिणा' इति। जलोद्धताख्यं वृत्तमिदं तथाचोक्तं पैंगलसूत्रं 'जलोद्धतगतिर्ज्सौज्सौरसर्तवः' तथैव केदारोक्तिः 'रसैर्जसजसा जलोद्धतगतिः' इति चोभयसंमतेन प्रतिपादं जगणः सगणः जगणः सगणः षड्भिः षड्भिश्च यतिरित्येतद्वृत्तंजलोद्धतगत्याख्यं रथोद्धतगतिरिति केचित्पठंति चेत्यर्थः ॥ ६९ ॥

## ॐप्रमथाधिपाय नमः

मथ्नंतितरां यदवैदिकांस्त्वत्पारिषदाः प्रमथा मताः ॥
तानीश सदा परिपालयन्भक्तैरुदितः प्रमथाधिपः ॥ ७० ॥

प्रकर्षेण मथ्नंत्युन्मूलयति अवैदिकान्वेदविरुद्धाचारयुक्तानितिप्रथमास्तेषामप्यधिपः पालक इति प्रमथाधिप इत्यभिप्रेत्याह मथ्नंतीत्यादि तरामितितिङंतात्तरप्तआम् च । पदार्थप्रकर्षद्योतकमव्ययं पारिषदा गणविशेषास्तान्पारिषदान्सदा परिपालयन्निति तथा चोक्तं सौभिके 'मनोवाक्कर्मभिर्भक्तान्पाति पुत्रानिवौरसान् ॥ पिबंत्यसृग्वसा चान्ये क्रुद्धब्रह्मद्विषां सदा' इति । इदं चोपस्थिताख्यं वृत्तम् तथा पैंगलसूत्रम् 'उपस्थिता त्जौ ज्गौ' तथाचोक्तमभियुक्तैः 'त्जौ जौगउपस्थितमीरितम्' इति चोभयोर्लक्षणैक्यम्। प्रतिपादं तगणः जगणः जगणः गुरुश्चेतद्वृत्तं दशाक्षरपादं भवतीत्यर्थः ॥ ७० ॥

## ॐमृत्युंजयाय नमः

रुद्राच्युतेशब्रह्मणां कोटचो यया गीर्णाः क्षणात् ॥
तद्गोचरो न त्वं विभो तेनाभवो मृत्युंजयः ॥ ७१

मृत्युर्मृतिस्तां जयति स्वविषयकोपासनया स्वभक्तानां मृतिं निवारयतीति मृत्युंजयः रुद्रेत्यादि ब्रह्मविष्णुरुद्रेश्वराणां कालनिर्णयस्य प्रागेव स शिव इति निर्वचने प्रदर्शितत्वान्नेह तत्प्रपंचः। ते ते च ब्रह्मादयः प्रतिकल्पं छिद्यमानाः कोटिसंख्याका अपि यया मृत्या क्षणमात्रादेव गीर्णाः क्षीणगतिं प्राप्ताः विनष्टा इति यावत् । तथापि त्वं न तद्गोचरः । न मृत्युविषयः 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' इतिश्रुतिस्तस्त्वं मृत्युंजयनाम्ना प्रसिद्धो भवसीत्यर्थः । अभव इति जन्मराहित्यपरं मृत्यभावसाधनाय जन्मनो मृतिव्यावर्तकत्वाल्लड्मध्यमपुरुषः स्पष्टार्थमन्यत् । मृत्युंजयाख्यं वृत्तमिदं। तदुक्तमभियुक्तैः 'तोमोगलामृत्युंजय' इति। प्रतिपादं तगणः मगणः लघुगुरुश्चेत्तद्वृत्तं मृत्युंजयाख्यं भवतीत्यर्थः ॥ ७१ ॥

## ॐसूक्ष्मतनवे नमः

दुर्ज्ञेयमूर्तिधरोऽप्याम्नातके मकठः ॥
सूक्ष्मादपीश कृशस्तेनासि सूक्ष्मतनुः ॥ ७२ ॥

सूक्ष्मा तनुर्मूर्तिर्यस्येति सूक्ष्मतनुः सूक्ष्मत्वं मूर्तौ दुर्ज्ञेयत्वमित्यभिप्रेत्याह दुर्ज्ञेयमूर्तिः आम्रां-
तक इति क्षेत्रविशेषः तत्र भक्तानुग्रहार्थं नामरूपाभ्यां पुनः प्रकटो भवसीत्यर्थः अथवा सूक्ष्मादपि-
तनुः सूक्ष्मतनुः तनुशब्दस्य कृशवाचित्वाद् दुर्ज्ञेयस्वरूपइत्यभिप्रेत्याह सूक्ष्मादपीति तथाच श्रुतिः
'सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये धृतात्परं मंडति वाति सूक्ष्मं' तथाच 'सूक्ष्मात्सूक्ष्मतरं नित्यं तत्व-
मेव तत्' इति । चूडामण्याख्यं वृत्तमिदं तथाच पैंगलसूत्रं 'चूडामणिस्तभौग' इति प्रतिपादं
तगणः भगणः गुरुश्चैतद्वृत्तं चूडामण्याख्यं भवतीत्यर्थः ॥ ७२ ॥

## ॐजगद्व्यापिने नमः

**सत्ताभानं प्रियमिति चानुस्यूतं सर्वेष्वर्थेष्वनुभवसिद्धं लोके ॥**

**सच्चित्सौख्यंत्रयमपि यौष्माकीणं रूपं तस्माद्भवसि जगद्व्यापी त्वम् ॥ ७३ ॥**

जगत्समष्टिव्यष्ट्यात्मकप्रपंचजातं व्याप्तुं शीलमस्यास्तीति जगद्व्यापीत्याशयेनाह सत्ताभान-
मित्यादिना सत्ता सत्स्वरूपं भानं ज्ञानस्वरूपं प्रियं सुखस्वरूपं चेत्यंशत्रयमप्यनुस्यूतमापामरसा-
धारणाखिललोकानुभवसिद्धं च सच्चित्सौख्यात्मकं तत्त्रितयमपि यौष्माकीणं परमशिवस्वरूपानपा-
यिभूतं तदुक्तमन्यत्र 'अस्ति भाति प्रियं रूपं नाम चेत्यंशपंचकम् ॥ आद्यं त्रयं ब्रह्मरूपं जग
द्रूपं ततो द्वयम्' इति । तथाचांशत्रयात्मकप्रपंचस्वरूपत्वात्परमशिवस्य जगद्व्यापित्वं सुकरमेवेति
भावः । तथा च श्रुतिः 'सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः' इति । जलधरमालाख्यं वृत्त-
मिदं तदुक्तमभियुक्तैः 'अब्ध्यंगैः स्याज्जलधरमालाम्भौस्मौ' इति । प्रतिपादं मगणः भगणः
सगणः मगणः चतुर्भिरङ्गभिर्यतिरित्येतद्वृत्तं जलधरमालाख्यं भवतीत्यर्थः ॥ ७३ ॥

## ॐजगद्गुरवे नमः

**वटतरुनिकटे मुनीनखिलान्सुरान्कमलभवमुखान्प्रबोधनमुद्रया ॥**

**उपदिशसि परं महस्तव दक्षिणामुख परशिव तन्मतोऽसि जगद्गुरुः ॥७४॥**

जगतां ब्रह्माद्यखिलसुरमुनिगणानां गुरुः आद्यब्रह्मणे विद्योपदेष्टेति जगद्गुरुः । 'यो ब्रह्माणं
विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मात्' इतिश्रुतेः । तदेवोपदर्शयति वटतरुरित्यादिना
वटविटपिनि वटोपगतान्कमलभवप्रभृत्यखिलसुरगणान्मुनिगणांश्च प्रबोधनमुद्रया चिन्मुद्रापर-
नाम्न्या उपदिशसि किं तदुपदेशनमित्याकांक्षायामाह परं मह इति । तवेत्यभेदार्थिका षष्ठी । त्वद-
भिन्नं महः । तथा च सच्चिदानंदात्मकं यत्परं ज्योतिःस्वरूपं परमशिवतत्वं तदुपदेशेन अविद्यायाः
परं पारं तारयसीत्यर्थः । दक्षिणामुखश्चासौ परमशिवश्चेति संबुद्धिः । शिष्टं स्पष्टमपराजिताख्यं
वृत्तमिदं तथा च पैंगलसूत्रम् 'अपराजिता नौ सौ ल्गौ स्वरऋषयः' तथा च केदारे 'ननरसलघुगैः
स्वरैरपराजिता' इति । प्रतिपादं नगणः सगणः लघुर्गुरुश्चेत्येतद्वृत्तमपराजिताख्यम् ॥ ७४ ॥

अथ मूलम् ।

व्योमकेशो महासेनजनकश्चारुविक्रमः ॥ रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगंबरः ॥
अष्टावेतानि नामानि निर्वक्ति ॥

## ॐव्योमकेशाय नमः

पृथ्वीपाथोज्वलनपवनव्योमरूपेषु भूते-
ष्वल्पाल्पानि प्रथमगदितान्युत्तराणीशितॄणि ॥
व्योम्नोऽपीशोऽस्यथ च गमनं कुंतलास्ते विराजो
गंगाधारा वियदिव जटास्तेन च व्योमकेशः ॥ ७५ ॥

पृथ्वीत्यादिना व्योमैव व्योमकं स्वार्थे कप्रत्ययः। तस्येशो व्योमकेश इत्यभिप्रेत्याह पृथिव्यप्तेजोवाय्वाकाशात्मकेषु भूतेषु मध्ये प्रथमगदितानि आकाशादितः पूर्वपूर्वोक्तानि वाय्वादीनि अल्पानि आकाशापेक्षया वायुस्तदपेक्षया तेजस्तदपेक्षयापस्तदपेक्षया पृथिवीति। उत्तरोत्तरापेक्षया पूर्वपूर्वाण्यल्पाल्पानि व्याप्यानि अभिभाव्यानीति यावत्। एतेन उपदर्शितार्थान्वयवैपरीत्ये सति पृथ्व्यादितः आकाशादीनि पूर्वपूर्वापेक्षया उत्तरोत्तराणि ईशितॄणि इत्यपि व्याख्यातम्। ईशितॄणि व्यापकानि अभिभावकानि इति यावत्। तथा च पृथिव्यादीनां आकाशादित उत्पत्तेः श्रुतिबोधितत्वेन कार्याणां च कारणेषु विलयनार्थं पूर्वपूर्वाण्यल्पाल्पान्युत्तरोत्तराणीशितॄणि इत्युक्तिर्युक्तेति भावः। तथा च श्रुतिः 'आत्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी' इति। व्योम्नोऽपीति ईशः व्यापकः व्योम्नोपीत्यपिना पूर्वपूर्वेषां सर्वेषामपि विलयनाधिष्ठातृत्वेन सर्वव्यापक इत्युक्तं भवति। 'यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंतीति' 'सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः' इत्यादिश्रुतेः। 'मयि सर्वं लयं याति मत्तः सर्वं प्रवर्तते' इत्यादिस्मृतेश्चेति। अथवा व्योमैव केशो व्योमकेश इत्यभिप्रायेणाह अथचेति अथवेत्यर्थः। कुंतलाः केशसमूहाः विराजः विराड्रूपस्य परमशिवस्येत्यर्थः। अथवा केशशब्दो जटावाची व्योमवद्विस्तृताः केशा जटा यस्येति व्योमकेशः जटाना च व्योमवद्विस्तरणं सफलीकर्तुमुक्तं गंगाधारा इति। जटानां विशेषणं गंगाया आधारभूताया इत्यर्थ इति। मंदाक्रांताख्य वृत्तमिदं तथा च पैंगलसूत्रं 'मंदाक्रांता म्भौ न्तौ तगौगसमुद्रऋतुस्वराः' तथाचोक्तं वृत्तरत्नाकरे 'मंदाक्रांता जलधिषडगे म्भौनतौ ताद्गुरू चेत्' इत्युभयमतेऽपि साम्यत्वात्। प्रतिपादं मगण. भगणः नगणः तगणः तगणः गुरुद्वयमित्येतद्वृत्तं मंदाक्रांताख्यं भवतीत्यर्थः ॥ ७५ ॥

## ॐमहासेनजनकाय नमः

सुब्रह्मण्येन पृष्टे प्रणवपरमार्थेऽत्र क इति
ब्रह्मण्यब्जेक्षण स्वं दिशति सति कारानियमिते ॥
आत्मा वै पुत्रनामेत्युपादिशति तौ मोचितवति
स्वय्यब्जाक्षाब्जपुत्रैः स्तुत इति महासेनजनकः ॥ ७६ ॥

कुमारसंहितायां कथां संगृह्णाति सुब्रह्मण्येनेति सुब्रह्मण्येन स्कंदेन प्रणवपरमार्थः प्रणवस्य सकलवेदसारात्मकस्योंकारस्य परमार्थः अभिप्रायविषयीभूतार्थः । अत्र लोके कः इति पृष्टे सति ब्रह्मणि कमलोद्भवे अब्जेक्षणे विष्णौ स्वं दिशति अहमेव प्रणवपरमार्थोऽहमेव प्रणवपरमार्थ इति स्वयमेव प्रणवार्थत्वेनोपदिशति । सति कारानियमिते अहमहमित्यनिष्टाकुलितचेतोव्यापारा-विमावित्ति कारागृहे पातिते आत्मेत्यादि अपरमितानंदस्वरूप इति 'परं ज्योतिः परमात्मैव ओंकारगम्यः स च स्वमेव आत्मा वै पुत्रनामा' इतिश्रुतेरित्येवं बहुमन्यमानोपदेशेन कारागृह-नियमनात् । ब्रह्माविष्णू मोचितवति त्वयि परमशिवे अब्जाक्षाब्जपुत्रैः अब्जाक्षो विष्णुः अब्जो ब्रह्मा पुत्रः स्कंदस्तैः स्तुत इति तथा च ब्रह्माद्यखिलसुरगणैः कामं स्तुतत्वात् । महासेनजनक इति लोके प्रसिद्धो भवसीत्यर्थः । महासेनाख्यं वृत्तमिदं तथाचोक्तमभियुक्तैः 'म्रौ भ्नौ त्सौ सप्तरुद्रैर्यतिरिति महासेनमुदितम्'। सरसाख्यमितिकेचित्पेठुः प्रतिपादं मगणः रगणः भगणः तगणः सगणः सप्तभिरेकादशभिर्यतिरिति महासेनं भवति ॥ ७६ ॥

## ॐचारुविक्रमाय नमः

परमशिव त्वया ये निषूदिता गजजलंधरत्रैपुरादयः ॥
अपुनरागमं ते पदं गतास्तव चमत्कृतिश्चारुविक्रमः ॥ ७७ ॥

चारुः मनोहरः विक्रमः पराक्रमो यस्येति तथा तत्र पराक्रमे मनोहरत्वमुपदर्शयति परम-शिवेत्यादि गजजलंधरत्रैपुरादयो ये सुरविरोधिनः स्वकटाक्षनिरीक्षणादिलीलामात्रे निषूदितास्ता-नेव पुनः परमैश्वर्यास्पदं प्रापितवानित्येतदेव चारुत्वं विक्रमस्येति भावः अपुनरागमं पुनरागमन शून्यं नित्यमिति यावत् । ते तव पदं गताः कैलासं प्राप्ताः । स्पष्टमन्यत् । कामिनीसंज्ञकं वृत्तमिदं तथाचोक्तमभियुक्तैः 'नररलै सगैः कामिनी भवेत्' इति । प्रतिपादं नगणः रगणद्वयं लघुर्गुरुश्चे-त्युक्तं कामिनीसंज्ञकं भवतीत्यर्थः । वैतालीयसमपादलक्षणसाम्यादपरांतिका भवति । तथा च चतुर्थपंचममात्रयोर्मेलनात्प्राच्यवृत्तिसंज्ञकं वृत्तं भवतिचेत्यर्थः ॥ ७७ ॥

## ॐरुद्राय नमः

वालो धातृललाटाज्जातः सन्नरुदस्त्वं
सोऽरोदीयदरोदीदित्यादपि रुद्रः ॥
उल्लाघीकरणाद्वा निश्चितीकरणाद्वा
संवर्ते रोदयासि ब्रह्मादीनिति रुद्रः ॥ ७८ ॥

रोदितीतिरुद्रः रोदनवानित्यर्थ इत्यभिप्रेत्याह बाल इत्यादि धातृललाटाज्जातः आविर्भूतः । अरुद इति । ब्रह्मललाटाद्वाविर्भूतस्य परमशिवस्य शैशवभावाभिव्यंजकं च रोदनं भारते शांतिपर्वणि प्रपंचितं यथा 'ततस्तां विपुलां नीतिपूर्वं जग्राह शंकरः ॥ बहुरूपो विशालाक्षः शिवः स्थाणुरु-

मापतिः ॥ अनादिनिधनो देवः चैतन्यादिसमन्वितः ॥ ज्ञानानि च वशे यस्य तारकादीन्यशेषतः ॥ अणिमादिगुणोपेतमैश्वर्यं न च कृत्रिमम् ॥ तुष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः स्वयम् ॥ अरुदत्सुस्वरं घोरं जगतः प्रभुरव्ययः" इति । अथवा अग्निस्वरूपत्वाद्वा रुद्रपदप्रतिपाद्यत्वं परमशिवस्येत्याह अग्नित्वादपीति ॥ अग्नेः रोदनशालित्वे किं प्रमाणमित्याकांक्षायां श्रुतिस्तत्र प्रमाणयति। सोऽरोदीदिति 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इत्यादि । तथाचोक्तं शिवपुराणे 'बहिरंतर्जगद्विश्वं प्राप्य तेजोमयी शुभा ॥ रौद्री रुद्राभिधा मूर्तिरास्थिता घोररूपिणी' इति । अग्न्यधिष्ठान्याः रुद्रमूर्तेरग्न्यात्मकत्वस्य तत्रैव स्पष्टं प्रपंचितत्वान्नेह तद्विविच्यते अथवा रुजं रोगं द्रावयति नाशयतीति रुद्रः रोगनिवर्तक इत्याशयेनाह उल्लाघीकरणादिति । शरीरादिरोगनिवर्तनद्वारा आरोग्यसंपादनलक्षणमुल्लाघीकरणमेतेन 'आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ॥ ज्ञानं महेश्वरादिच्छेन्मुक्तिमिच्छेज्जनार्दनात्' ॥ इत्यादिप्रमाणबलात्सर्वात्मिकत्वं परमशिवस्येत्युक्तं भवति । तदुक्तं लैंगे 'भोगैश्वर्यात्मा भगवान् देवः सर्वविभूतिदः ॥ रुद्र इत्युच्यते देवैर्भगवान्भुक्तिमुक्तिदः । इति ॥ अथवा रुद्दुःखं तद्धेतुभूतमज्ञानं द्रावयतीति रुद्र इत्यभिप्रेत्याह निश्चिंतीकरणादिति । तदुक्तं वायवीयसंहितायां 'रुडुःखं दुःखहेतुर्वा तद्द्रावयति यः प्रभुः ॥ रुद्र इत्युच्यते तस्माच्छिवः परमकारणम्' इति निश्चिंतीकरणं च दुःखस्य तद्धेतोरज्ञानस्य वा निराकरणेन चित्तैकाग्र्यसंपादनलक्षणमज्ञानकार्यत्वाच्चिंतायामिति भावः अथवा रोदयत्यंतकाले ब्रह्मादीनिति तथेत्याह संवर्ते रोदयसीति स्पष्टोऽर्थः । इदं च श्रुतिप्रसिद्धं नाम 'नमस्ते रुद्रमन्यव उतोत इषवे नमः' इति । 'यो रुद्रो अग्नौ सर्वो ह्येष रुद्र' इत्यादिभिः । लोलाख्यं वृत्तमिदं तथा चोक्तमभियुक्तैः 'द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत्' प्रतिपादं मगणः सगणः मगणः भगणः गुरुद्वयं च सप्तभिः सप्तभिश्च यतिरित्येतद्वृत्तंलोलाख्यं भवतीत्यर्थः ॥ ७८ ॥

## ॐभूतपतये नमः

धरणीजलादिषु तथात्मगणेष्वनुविश्य तान्नियमयन्नटसि ॥
अथवा पिशाचनिकरान्नटयन्भुवनावनाय ननु भूतपतिः ॥ ७९ ॥

भूतानां पृथिव्यादीनां जीवराशीना च पतिः नियामक इत्यर्थ इत्यभिप्रेत्याह धरणीजलादिषु इति । आदिपदात्तेजःप्रभृतीनां परिग्रहः आत्मगणाः जीवराशयः अनुविश्य अंतः प्रविश्य 'तत्सृष्ट्वा तदेवानुप्राविशत्' इतिश्रुतेः । 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ॥ संपश्यन्ब्रह्म परमं याति नान्येन वर्त्मना' इति स्मृतेश्च । तान्धरण्यादीन्नियमयन्शिक्षयन्नटसि नटनपूर्वकं विहरसीत्यर्थः । अटसीति वा छेदः । अथवा भूता देवयोनिविशेषाः पिशाचापरस्वरूपाः 'पिशाचो गुह्यकः सिद्धो भतोऽमी देवयोनयः' इत्यमरः । तेषां पतिर्नाथ इति । तथा चाह अथवेति पिशाचनिकरान्पिशाचसमूहान्नटयन्नटनं कारयन्भुवनावनाय जगद्रक्षणाय । तदुक्तं भारते उमामहेश्वरसंवादे देवीकृतश्मशानवासित्वनियामकप्रश्ने यथा 'यदन्येन न शक्यं हि निहंतुं भूतजं भयम् ॥ तत्रस्थोऽहं

प्रजाः सर्वाः पालयामि दिने दिने ॥ मन्नियामाद्भूतसंघा न च घ्नंति हि कंचन ॥ तांस्तु लोकहितार्थाय स्मशाने रमयाम्यहम् ' इति स्पष्टमन्यत् । प्रमिताक्षराख्यं वृत्तमिदं तथाच सूत्रं ' प्रमिताक्षरा सजौ सौ' । तथैव कैदारोक्तौ ' प्रमिताक्षरा सजससैरुदिता इति । प्रतिपादं सगणः जगणः सगणद्वयंचैतद्वृत्तं प्रमिताक्षराख्यं भवतीत्यर्थः । आर्यागीतिर्वा । ' अर्धे वसुगण आर्यागीतिः', इति लक्षणात् ॥ ७९ ॥

## ॐस्थाणवे नमः

वृक्षाभःस्तब्धो दिवि भुवि पुर उद्दिश्य
स्फारं वर्षाणि स्थिरतर उदतिष्ठस्त्वम् ॥
ज्योतिर्लिंगेऽपि प्रभवति सति नैश्चल्या-
त्कल्पांते वातैर्न चलसि तदसि स्थाणुः ॥ ८० ॥

स्थाणुः शंकुमात्रावशेषो ध्रुवो वृक्षस्तद्वत्सर्वत्राचंचलः सन्प्रकाशत इति परमशिवोऽपि स्थाणुपदप्रतिपाद्य इत्याह वृक्षाभस्तब्ध इति । दिवि भुवि च निश्चलतया स्थित इत्यर्थः । तथा च श्रुतिः 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णंपुरुषेण' इति । अथवा त्रिपुरविजयावसरे सज्जीकृतचापः सन्पुराणां क्रमयोगसमयं प्रतीक्ष्य निश्चलतया चिरकालं स्थितत्वात्स्थाणुपदप्रतिपाद्यत्वं परमेश्वरस्येत्यर्थेनाह पुर उद्दिश्येति । पूःशब्दो रेफांत इति । पुर इति द्वितीयाबहुवचनांतः । पुरत्रयमुद्दिश्येत्यर्थः । स्फारं यथा तथा वर्षाणि बहुवर्षाणि तथाचोक्तं भारते द्रोणपर्वणि 'अतिष्ठत्स्थाणुभूतः सन्सहस्रपरिवत्सरान् ॥ यदा त्रीणि समेतानि अंतरिक्षे पुराणि वै ॥ त्रिपर्वणि त्रिशल्येन तदा तानि बिभेद सः' । इति अथवा आपातालव्याप्यलिंगप्रादुर्भावावसरे ज्योतिर्लिंगात्मना निश्चलतया स्थितत्वात्तथेत्याह ज्योतिर्लिंगेऽपीति तदुक्तं शैवागमे 'नमोऽस्तु स्थाणुरूपाय ज्योतिर्लिंगामृतात्मने ॥ चतुर्मूर्तिवपुःस्थाय भसितांगाय शंभवे' इति । उपदर्शितव्युत्पत्तित्रयं च द्रोणपर्वणि प्रदर्शितं यथा 'दहत्यूर्ध्वस्थितो यच्च स्थाणुवत्तत्स्थितं च यत् ॥ स्थिरलिंगं च यन्नित्यं तस्मात्स्थाणुरिति स्मृतिः' इति । स्थितः सन्नूर्ध्वं विद्यमानं पुरत्रयं दहति । तत्स्थितं तावत्कालं चिरकालं स्थाणुवत्स्थित इत्यर्थः । कल्पांत इति सकलजगत्संक्षोभणकालेऽपि प्रचंडवातैरचलनाद्वा स्थाणुरित्यर्थः । इदं च असंबाधाख्यं वृत्तमिति । तथा च पैंगलसूत्रम् 'असंबाधा म्तौ न्सौ गाविद्रियनवकौ' तथा च वृत्तरत्नाकरे 'म्तौ न्सौ गावक्षग्रहविरतिरसंबाधा' इतिचोभयसंमतेन प्रतिपादं मगणः तगणः नगणः सगणः गुरुद्वयं च पंचभिर्नवभिश्च यतिरित्येतद्वृत्तमसंबाधाख्यं भवतीत्यर्थः ॥ ८० ॥

## ॐअहिर्बुध्न्याय नमः

ब्रह्मांडस्याधो दशशतफणो बुध्न्यभावं प्रयाते
पाताले साधुर्नहतिवसुधां सार्णवद्वीपशैलाम् ॥

तन्मूर्धभ्योंऽते विषमयवपुः कालसंकर्षणाख्यो
रुद्रो भूत्वेदं दहसि निखिलं सोऽस्यहिर्बुध्न्यनामा ॥ ८१ ॥

बुध्न्यशब्दो मूलवाची 'मूलं बुध्न्योंघ्रिनाम च' इत्यमरात्। 'तत्र साधु' इतिसूत्रेण बुध्नशब्दस्य यप्रत्यययोगात् बुध्न्यः ब्रह्माण्डमूलभूतपातालवर्तीतियावत् स च सहस्रफणाशाली शेषसंज्ञकः सर्पराडित्यर्थः। तथाचासमस्तं पदद्वयमेकं नामेत्याह ब्रह्मांडस्येति दशशतफणः सहस्रफणः शेषाख्यसर्प इतियावत्। बुध्न्यभावं मूलभावं प्रयाते प्राप्ते पाताले साधुः पातालवर्तीति यावत्। बुध्न्यशब्दस्य यप्रत्यय बोधनार्थः 'तत्रसाधु' इतिसूत्रांतर्गतैकदेशस्य साधुरित्यस्य प्रयोगः सार्णवद्वीपशैलां समुद्रद्वीपपर्वतादिभिः संमीलिता वसुधा भूमिं वहति धारयतीत्यर्थः। तन्मूर्धभ्यः तस्य शेषाख्यस्य सर्पराजस्य मूर्धभ्यः फणेभ्यः विषमयवपुः विषप्रचुरशरीरः इदं परिदृश्यमानं निखिलं जगद्दहासि उपसंहरसीत्यर्थः। तथाचोक्तं विष्णुपुराणे द्वितीयेंऽशे यथा'पातालं नाम यत्रास्ते विष्णोर्या तामसी तनुः॥ शेषाख्या तद्गुणान्वक्तुं न शक्ता देवदानवाः ॥ कल्पांते यस्य वक्त्रेभ्यो विषानलशिखोज्वलः ॥ संकर्षणात्मको रुद्रो निष्क्राम्यति जगत्त्रयम्' इति। इविर्यज्ञमय इत्येकं नाम पाकयज्ञाद्युपलक्षणमिति व्याख्याय नामद्वयमिदमिति तु न भ्रमितव्यं 'अहेर्बुध्निय मंत्रं मे गोपाय'। 'अहये बुध्नाय स्वाहा'। इत्यादिश्रुतिषु पदद्वयस्यैकनामत्वावेदनात्। कुसुमितलतावेल्लिताख्यं वृत्तमिदं तथा च पैंगलसूत्रं 'कुसुमितलतावेल्लिता म्तौ न्यौ याविंद्रियर्तुस्वराः'। तथा च वृत्तरत्नाकरे लक्ष्म 'स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौनयौ यौ' इति चोभयमतेन प्रतिपादं मगणः तगणः नगणः यगणत्रयं पचभिः षड्भिः सप्तभिश्च यतिरित्येवंवृत्तमष्टादशाक्षरपादश्चेचद्वृत्तं कुसुमितलतावेल्लिताख्यं भवतीति। धृतेर्भेदोऽयमित्यर्थः ॥ ८१ ॥

## ॐदिगंबराय नमः

महेश दारुकावने महर्षिसिद्धसेविते तताः पतिव्रताः परीक्षमाणया धिया ॥
मनोभवातिशायिनीं मनोहरां दधत्तनूमुपागतस्तदाश्रमेषु भिक्षितुं दिगंबरः ॥८२॥

दिश एवांबराणि यस्येति दिगंबरः महेशेति संबुद्धिः तदंगनाः ऋषिपत्नीः पतिव्रताः पतिशुश्रूषणेकव्रद्धमताः पत्येकभावितदेवता इति यावत्। परीक्षमाणया धिया पातिव्रत्यशोधनार्थं बुद्ध्या मनोभावातिशायिनीं मनोभवस्य मन्मथस्यापि अतिशायिनीं संमोहकां मनोहरां हृद्यां तनूमुपागतः प्राप्तः। तदाश्रमेषु ऋष्याश्रमेषु भिक्षितुं भिक्षामाद्रितुं दिगंबर इति तथाचोक्तं लैंगे 'ततस्तेषा प्रसादार्थं भक्तानामनुकंपया ॥ देव कृतयुगे पुण्ये पृष्ठे हिमवतः शुभे ॥ देवदारुवनं प्राप्तः प्रसिद्धः परमेश्वरः॥ भस्मपांडुरदिग्धांगो नग्नो विकृतलक्षणः। उल्मुकासक्तहस्तश्च रक्तपिंगललोचनः ॥ क्वचित्प्रहसते रौद्रं क्वचिज्जल्पति विस्मितः ॥ क्वचिन्नृत्यति शृंगारं क्वचिद्रौति मुहुर्मुहुः ॥ आश्रमे ह्यटते भैक्ष्यं जायते च पुनः पुनः ॥ माया कृत्वा तथारूपां देवस्तद्वनमागतः ॥' इति पंचचामराख्यं वृत्तमिदं तदुक्तमभियुक्तैः 'निरंतरं ठघुर्गुरुर्वदंति पंचचामरम्' इति षोडशाक्षरपादः स्पष्टलक्षणमित्यर्थः ॥ ८२ ॥

अष्टमूर्तिरनेकात्मा सात्विकः शुद्धविग्रहः ॥ शाश्वतः खंडपरशुरजः पाशविमोचकः ॥

इत्यष्टौ नामानि निर्वक्ति ॥

## ॐअष्टमूर्तये नमः

मेदिनी भूतमभिमन्यसे शर्व इति पाथसो भवपदेनाभिमानी
रुद्रनाम्ना तु वैश्वानरस्योग्र इति मारुतं भीम इत्यंबरस्य ॥
भानुमीशान इति शीतभानुं महादेव इत्यात्मनो यज्वनो वा
मन्यसे पशुपतीभूय शंभो जगद्व्याप्य तिष्ठन्भवस्यष्टमूर्तिः ॥ ८३ ॥

मेदिनीत्यादिना पृथिव्यादीनि पंच भूतानि चंद्रार्कौ आत्मा दीक्षित इत्यष्टौ
मूर्तयः शरीराणि यस्येति वा मूर्तिशब्दस्य मूर्तिमत्परतया शर्वादिसंज्ञकाः अष्टौ देवताः
मूर्तिमत्यः यस्येति वा अष्टमूर्तिः । पृथिव्याद्यष्टशरीरको वा तदभिमानी शर्वाद्यष्टदेवतासम-
ष्टिरूपो वेत्यर्थः इत्याशयेनाह मेदिनीत्यादि पंचभूतानां मध्ये पृथिव्यात्मकं भूतं शर्व इति नाम्ना
अभिमन्यसे अभिमानवानभवसि । पाथसः जलस्य विभक्तिविपरिणतस्य भूतपदस्योत्तरत्रापि यथा-
योग्यमन्वयः तथा च जलात्मकस्य भवपदेनाभिमानीत्यर्थः । वैश्वानरस्य तेजआत्मकस्य
भूतपदस्य रुद्र इति नाम्ना अभिमानीति संबंधः । मारुतमिति वाय्वात्मकं भूतमुग्र इतिनाम्ना
अभिमानीत्यर्थः । भानुरर्कस्तमीशानइतिनाम्ना अभिमन्यसे शीतभानुश्चंद्रस्तं महादेवइति नाम्ना
अभिमन्यसे आत्मनो यज्वनो वेति विकल्पः । पशुपतीभूयेति पशुपतिरितिनाम्ना क्षेत्रज्ञान्वीक्षि-
तान्वा अभिमन्यस इति । 'अधिष्ठिता महेशस्य शर्वाद्याभिश्च मूर्तिभिः ॥ चराचरात्मकं विश्वं
धत्ते विश्वंभरात्मना' इति । तथा लैंगेऽपि 'अष्टमूर्तिर्जगद्व्याप्य स्थितोऽयं परमेश्वरः ॥ चरा-
चराणां भूताना धाता विश्वंभरात्मकः ॥ भवश्चेत्युच्यते देवैर्भगवान्वेदवादिभिः' इति । आन्दोलि-
काख्यं वृत्तमिदं तथाचोक्तमभियुक्तैः 'सप्तभिः प्रहरणैः संयुतातिमगुरुस्त्रिदशसु यतियुतान्दोलिकोक्ता'
प्रहरणं पञ्चमात्रो गणः । 'आयुधवाचकशब्दः पंचकलाना भवेत्संज्ञा' इतिप्राकृतसूत्रवाणीभूषणादौ
च परिभाषितत्वात् । तथा च प्रतिपादं सप्तत्रिंशत्संख्याकाः मात्राः दशभिर्दशभिश्च सप्तभिश्च यति-
रित्येतद्वृत्तमान्दोलिकाख्यं भवतीत्यर्थः । अत्र च सप्तमात्रात्मिकायाः चरमयतेः पादांतिमत्वेन
तत्प्राप्तेरार्थिकत्वाचदुपेक्ष्य त्रिर्दशभिर्यतिरित्युक्तमित्यवधेयम् ॥ ८३ ॥

## ॐअनेकात्मने नमः

यत्किंचिद्ब्रह्मांडे सर्वो वै रुद्रस्तत् ॥
संख्येयत्वाभावाद्विख्यातो नेकात्मा ॥ ८४ ॥

अनेकः आत्मा वस्तुस्वरूपं जीवो वा यस्येत्यनेकात्मा अखिलप्रपंचात्मकः असंख्यातजीव
प्रपंचात्मको येति क्रमेण दर्शयति यत्किंचिदित्यादिना यत्किंचिच्छब्दो यावत्परः 'यत्किंचि-

त्प्राचीनमग्नीषोमीयात्' इत्यादौ तथा व्याख्यानात्। तथा च दृश्यादृश्यात्मकं यावद्वस्तुजातं तत्सर्वं रुद्रात्मकमेवेत्यर्थः। तथा च श्रुतिः 'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु' इति। अथवाएकद्वित्रित्वादीभिः परिगणितुमशक्यत्वात्तथैतद्दर्शयति संख्येयत्ताभावादिति संख्याया अवध्यभावादित्यर्थः 'असंख्याताः सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्' इतिश्रुतेः। शेषं सुगमं शेषाख्यं वृत्तमिदं तदुक्तमभियुक्तैः 'मद्वंद्वं शेषाख्यम्' इति प्रतिपादं मगणद्वयं यत्र भवति तच्छेषाख्यं वृत्तं भवतीत्यर्थः॥ ८४॥

## ॐसात्त्विकाय नमः

त्वयि निवसति जन्तुरस्तितागुण इति तानि तव प्रयोजनम्॥
त्वमपि भवसि तेषु तद्वपुः परशिव तेन मतोऽसि सात्त्विकः॥ ८५॥

निवसन्ति सत्वान्यस्मिन्निति सात्विकः। तदस्य प्रयोजनमिति प्रयोजनार्थकः ठक्प्रत्ययः। अत्र सत्वपदार्थमादौ दर्शयन्प्रत्ययप्राप्त्यर्थमप्याह त्वयि निवसतीत्यादिना सत्वपदं प्राणिपरं सत्तापरं गुणविशेषपरं च जंतुः प्राणिवर्गः। अस्तिता वर्तमानत्वं कालत्रयाबाध्या सत्तेतियावत्। गुणः रजस्त मोभ्या पूर्वो गुणविशेषः। इति शब्दो हेत्वर्थः। तथा च यतो जंत्वादित्रितयमपि त्वयि परमे शिवे निवसतिं संस्थितिं प्राप्नोति अतस्तानि तव प्रयोजनमिति ठक्प्रत्ययप्राप्तिरुक्ता प्रयोजनत्वं च प्रवर्तकत्वं सत्वप्रवर्तक इत्यर्थः। तथा च श्रुतिः 'महान्प्रभुर्वै पुरुषः सत्वस्यैष प्रवर्तक' इति। अथवा सत्वेषु भवः सात्विकः 'तत्र भव' इत्यर्थः अध्यात्मादित्वाठञ्वृत्त्वार्थकः ठक्प्रत्ययः। सत्ववर्तीत्याशयेनाहत्वमपीति भवसि सबद्धोऽसि तेषूपदर्शितसत्वपदार्थेषु। तत्र हेतुमाह तद्वपुरिति शुद्धसत्तामात्रशरीरवानित्यर्थः। तदुक्तं स्कान्दे सूतसंहितायां 'यस्य मायागतं सत्वं शरीरं स्यात्तमोगुणम्॥ संहाराय त्रिमूर्तीनां स रुद्रः स्यान्न चापर' इति। यस्य परमशिवस्य मायागतं सत्वं शरीरं भवति तस्यैव त्रिमूर्तीनां संहाराय तमोगुणं शरीर न तु स्वभाविकमित्यर्थः। अत्र च सर्वमाण्यंतर्यामितया जंतुवृत्तित्वमभेदप्रत्यासत्या सत्तावृत्तित्वं सत्वगुणैकमूर्तित्तया गुणविशेषवृत्तित्वमित्यवधेयं तथा च 'राज्ञि राष्ट्रम्' इत्यादिवदारोपिताधाराधेयभावात्। जगद्विचित्रचरित्रशालिपरमशिव इत्युपदर्शिते कल्पद्वयतात्पर्यविषयीभूतार्थ इत्यसंदर्व्याख्यार्थः। अपराख्यं वृत्तमिदं तथा च वैगलसूत्रम् 'अर्ध' इत्यधिकृत्य 'अपम्वक्रं नौरोलौ ग्जौ ज्रौ' इति। प्रतिपादं विषमपादे नगणद्वयं रगण लघुर्गुरुश्च समपादे तु नगण. जगणद्वयं रगणश्चैतद्वृत्तमपराख्यमर्धसमवृत्तं भवति तथाचोक्तं केदारे 'अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौजरौ' इति 'षड्विषमे ऽष्टौ सम' इत्याधिकृत्य 'वैतालीयेतरे लौ गुरु' इति लक्षणसाम्याद्वैतालीयसंज्ञक मात्रावृत्तमपि भवतीत्यर्थः॥ ८५॥

## ॐशुद्धविग्रहाय नमः

घनघृतमिव सत्वमात्रपिण्डो ननु वपुरण्वपि ते रजस्तमोऽक्तम्॥
शिव भवसि च नैव कृत्ययोधी हरसि मलानिति शुद्धविग्रहस्त्वम्॥ ८६॥

शुद्धसत्वमात्रप्रधानो विग्रहः शरीरं यस्येति शुद्धाविग्रह इत्याह घनघृतमित्यादिना घनीभूतं घृतमिव सत्वमात्रपिंडः शुद्धसत्तामात्रशरीरशालीत्यर्थः । तथा च स्मृतिः 'अप्राकृतशरीरं तमतिमन्मथरूपिणम् ॥ घृतमिव घनीभूतं सच्चिदानंदविग्रहम्' इति । मात्रपदव्यावर्त्यमाह नात्विति ते वपुः अण्वपि रजस्तोभ्यां नाक्तमित्यन्वयः । रजसा तमसा वा न कलुषितमित्यर्थः । अण्वपि नाक्तमित्यनेन शरीरमात्रस्य त्रिगुणात्मकमायामयत्वेऽपि लीलामात्रोपयुक्तेऽस्मिन्परमशिवशरीरे न तत्कार्यं किमपि भवितुमर्हतीत्येतत्सूचितम् । अतएव 'अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः ॥ रजसो मिथुनं सत्वं सत्वस्य मिथुनं रजः ॥ तमसश्चापि मिथुने ते सत्वरजसी उभे ॥ उभयोः सत्वरजसोः मिथुनं तम उच्यते ॥ नैषामादिः संप्रयोगो वियोगो वापि लभ्यते' इति सांख्याभियुक्तिरप्युपपद्यते । अथवा विग्रहशब्दो युद्धवाची । शुद्धोऽमायिकः विग्रहः संग्रामो यस्य अमायिकसंग्रामशालीत्यर्थः । इत्याशयेनाह शिवेत्यादि । हे शिव त्वं कूटयोधी न भवसीत्यन्वयः । कूटयोधी मायावीयुद्धवान् । एतेन युद्धेऽपि माया न करोतीत्यनेन निष्कपटत्वं नित्यसिद्धत्वमित्युक्तं भवति । अथवा शुद्धो निर्मलः विग्रहः शरीरं यस्मात्तदुपासनाच्छरीरं निर्मलं भवतीत्यभिप्रेत्याह हरसि मलानिति अनाद्यविद्यानुवर्त्याणवकार्मणमायीयाख्यान्मलानित्यर्थः । पुष्पिताग्राख्यं वृत्तमिदं तथाच पैंगलसूत्रं 'पुष्पिताग्रा नौ यौं न्जौ ज्रौ ग्' तथा च केदारे 'अयुजि नयुगरेफतोयकारो युजि जनजौ रगाश्च पुष्पिताग्रा' इतिचोभयमतेन विषमपादयोः प्रथमतृतीययोः नगणद्वयं रगणो यगणश्च समपादयोः द्वितीयचतुर्थयोः नगणः जगणद्वयं रगणो गुरुश्चैतद्वृत्तं पुष्पिताग्राख्यमर्धसमवृत्तं भवति । 'पर्यंते यौ'इत्यादिपूर्वोक्तलक्षणेन औपच्छंदसिकं मात्रावृत्तमपि भवतीत्यर्थः ॥ ८६ ॥

## ॐशाश्वताय नमः

पूर्वतो जगतो जनेः सर्वतो संहारतः परे ॥
वर्तमाने जगत्यपि त्वमस्येवेति शाश्वतः ॥ ८७ ॥

शश्वत्सदा साधु वर्तत इति शाश्वतः साध्वर्थकः अण्प्रत्ययः जगदुत्पत्तिस्थित्युपसंहाराख्यकालत्रयवर्तीत्याशयेनाह पूर्वत इति जगदुत्पत्तिपूर्वकाले जगत्संहारोत्तरकाले जगद्वर्तमानकाले त्वमनुस्यूततया वर्तमानत्वाच्छाश्वतिको भवसीत्यर्थः । तथाचाथर्वशिरसायां रुद्रवचनम् 'अहमेकः प्रथममास वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त' इति स्पष्टार्थं जाविपुलाख्यं वृत्तमिदं तथा च पैंगलसूत्रं 'सर्वत्र सैतवस्य' अष्टाक्षरेषु चतुर्ष्वपि चतुर्थाक्षरोत्तरं नभजान्यतमो गणश्चेत्सैतवाचार्यस्य मतेन विपुला जविपुला भविपुला नविपुलाश्च क्रमेण भवंति । प्रकृते जगणस्यैव सत्वाज्जाविपुलाख्यं वृत्तं भवतीत्यर्थः ॥ ८८ ॥

## ॐखंडपरशवे नमः

गजासुरवधे खंडास्तस्यजाताः परश्वः ॥
तदारभ्याखिलैर्देवैर्गीयसे खंडपरशुः ॥ ८९ ॥

पराञ्शृणातीति परशुः " आङ्परयोः खनिशृभ्यां डिच्च " इत्यौणादिकः कुप्रत्ययः । खंडाः विभिन्नाः परशवो यस्येति खंडपरशुरित्यत्र परशोः खंडने हेतुमाह गजासुरघेत्यादिना स्पष्टोऽर्थः । विपरीतचपलाख्यं वृत्तमिदं तथा च पैंगलसूत्रं ' चपला युजोन् ' । अष्टाक्षरपादयोः समयोः चतुर्थाक्षरोत्तरं यगणो वा जगणः विषमयोस्तु नगणः एतद्वृत्तं चपलाख्यं भवति । पादयोर्व्यत्यासेन निवेशे च विपरीतचपलाख्यं भवतीत्यर्थः ॥ ८८ ॥

## ॐअजाय नमः

न जनिः शिव ते ॥ तदसि त्वमजः ॥ ८९ ॥

न जायत इत्यजः स्पष्टं पांचालरमणाख्यं वृत्तमिदं तथाचोक्तमभियुक्तैः 'प्राकृतेष्वष्टभिर्योगैर्कर्णी च शशिप्रभा । रमणं चैव पांचालं मृगेंद्रश्चैव मंदरः ॥ कमल चैव संज्ञाश्वं वृत्ताष्टकमुदीरितम्' इति प्राकृतेषु प्राकृतसूत्रेषु वृत्ताष्टकमुदीरितमित्यनेनान्वयः । माद्यैः मयरसतजभनैः तथाच मगणात्मकचरणचतुष्टयमेतद्धो कर्णाख्यमित्येवमष्टभिः संज्ञकैः क्रमाद्वृत्ताष्टकं भवतीत्यर्थः प्रकृते च चतुष्टयस्यापि सगणात्मकत्वात्पांचालाख्यं वृत्त भवतीति बोद्धव्यम् ॥ ८९ ॥

## ॐपाशविमोचकाय नमः

अभिमतिगुणपंचपरुर्दशत्रिचतुरयुतविंशतिपाशतः ॥
शिवपदभजनेन विमोचयन्पशुगणमिति पाशविमोचकः ॥ ९० ॥

पाशाः संसारपतनहेतुभूताविद्याकार्यविशेषाः कर्तृत्वभोक्तृत्वाद्यभिमानादयस्तेभ्यो जीवान्विमोचयतीति पाशविमोचकस्ते च नानामतभेदेन नानारूपा इत्यावेदयंस्तन्निवृत्तिः परमशिवभजनपराणां नराणामतिसुलभेत्यभिप्रायेणाह अभिमतीत्यादिना । अभिमतिरभिमानः कर्तव्यभोक्तृत्वाद्यहंकार इतियावत्स एव पाश इति पाशैकत्ववादिनः । गुणाः सत्वरजस्तमोरूपास्त एव पाशा इत्येके पंच परूंपि पर्वाणि यस्याः अविद्यायाः सा पंचपरुः । तमो मोहमहामोहतामिस्रांधतामिस्ररूपभिन्नाविद्यास्मितारागद्वेषाभिनिवेशाख्यपंचक्लेशात्मिका अविद्येतियावत् सैव पाश इत्यन्ये दशेंद्रियाण्येव पाशा इत्यपरे । त्रयश्चत्वारो वा त्रिचतुरास्तैर्युता विंशतिस्त्रिचतुरयुतविंशतिश्चेति ये पाशाश्च तेभ्य इति पचम्यर्थे तसिल्प्रत्ययः । तथाचोक्तं लैंगे 'चतुर्विंशतितत्वानि पाशाः स्युः परमेष्ठिनः ॥ दशेंद्रियमयैः पाशैरंतःकरणसमवैः ॥ पचक्लेशमयैः पाशैः पशून्बध्नाति शंकरः ॥ अविद्यामस्मितां रागं द्वेषं च मुनिसत्तमाः ॥ वदत्यभिनिवेशं च क्लेशान्पाशितुमागतान् ॥ तमोमोह महामोहस्तामिस्रमिति पंडिताः ॥ अधतामिस्रमित्याहुः अविद्यां पचधा स्थिताम् ॥ अविद्यां तम इत्याहुरस्मितां मोहमित्यपि ॥ रागमाहुर्महामोह द्वेषं तामिस्रमुच्यते ॥ अंधतामिस्रमित्याहुस्तथैवाभिनिवेशनम् महाविस्तंवपर्यतान्पशून्बद्धा महेश्वरः ॥ त्रिभिर्गुणमयैः पाशैः कार्य कारयते स्वयम्' । इत्यादि । शिवपदेति उपदर्शितानेकपाशेभ्यः पशुगणं जीवराशिं त्वदीयपादारविंदभक्त्या

विमोचयन्पाशविमोचक इति प्रसिद्धो भवसीत्यर्थः । परमशिवभजनस्य पाशविमोचकत्वमुक्तं लैंगे 'सएव मोचकस्तेषां भक्त्या स म्यगुपासितः । अविद्यापाशबधानां नान्यो मोचक इष्यते । तमृते, परमात्मानं शंकरं परमेश्वरम्' इति । वायवीयसहितायामपि 'भावातिशयलभ्येन प्रसादेन मलक्षयम्, इति । मन्त्रोपनिषद्यपि 'सयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः॥ अनीशश्चात्मा बद्ध्यते मोक्तृभावात् ' 'ज्ञात्वा देवं मुच्यते सर्वपाशैः ' इति । उज्ज्वलाख्यं वृत्तमिदं तदुक्तमभियुक्तैः ' ननभरसहिताभिहितोज्ज्वला ' इति । प्रतिपादं नगणद्वयं भगणः रगणश्चैतद्वृत्तमुज्ज्वलाख्यं भवतीत्यर्थः ॥ ९० ॥

अथ नामश्लोकः

मृडः पशुपतिर्देवो महादेवो व्ययो हरिः ॥ पूषदन्ताभिदव्यग्रो दक्षाध्वरहरो हरः ॥

एतानि दश नामानि निर्वक्ति ॥

## ॐमृडाय नमः

पूर्णाहुत्या त्वयि सुहिते यज्ञे पूर्णे सति सुहिते ॥

यष्टृन्ध्यातॄनपि सुखयस्यार्यानेतस्तदसि मृडः ॥ ९१ ॥

पूर्णेत्यादिना मृड इति मृडसुखन इतिधातोः मृडयतीति मृडः सुखजनक इत्यर्थः । तच्च सुखं ज्ञानेन कर्मणा वेत्युभयथापि संभवतीत्याह सुहिते तृप्ते सुहिते शोभनं हितं इष्टं यत्र तस्मिंस्तथाचेष्टार्थजनकीभूतयज्ञसंपूर्तौ जातायां पूर्णाहुत्या परमशिवे च तृप्ते सति यष्टॄन्या- जकान्ध्यातॄञ्ज्ञानिनोपष्टॄंश्च सुखयसि सुखिनः करोषीत्यर्थः । तदुक्तमन्यत्र ' ज्ञानयोगरताः केचि- त्कर्मयोगरताः परे ॥ तेषामानंददः शंभुः कालयोगविवर्जितः ' । आर्य नेत इति आर्यायाः पार्वत्याः नेतो नायक इति संबुद्धिः । पारंतीयसंज्ञकं वृत्तमिदं तदुक्तमभियुक्तैः ' पारंतीयं ममसगणैः ' इति प्रतिपादं मगणः भगणः सगण इत्येतद्वृत्तं पारंतीयसंज्ञकं भवतीत्यर्थः ॥ ९१ ॥

## ॐपशुपतये नमः

ख्यातं तंत्रेषु पाशः पशुरथ पतिरित्येतत्त्रयमपि

स्वद्रूपं नाथ जीवान्नियमयसि नुतो मुक्तांश्च कुरुषे ॥

ग्राम्यारण्याधिपत्यं वहसि च यजमानात्माभिमतिमा-

न्भक्तान्नेपालपीठे रमयसि निवसन्नासीः पशुपतिः ॥ ९२ ॥

पशुशब्दः पशुपाशोभयपरः पशुश्चासौ पाशश्चासौ पतिश्चेति कर्मधारयः । तत्र पशुः पाशः पतिरिति त्रितत्त्वार्थवादिनः शैवाः पाशुपतापरनामकास्तेषां मतमभिप्रेत्याह ख्यातमिति प्रसिद्ध- मित्यर्थः । तंत्रेषु शैवतंत्रेषु तथाचोक्तं वायुसंहितायां ' अजडं च जडं चैव नियंतृ च तयोरपि ॥ अक्षरं च क्षरं चैव क्षराक्षरपरं तथा ॥ तदेत- त्पशुः पाशः पतिश्चेति कथ्यते त्रितयं क्रमात् ॥

त्रितयं भूयः कथ्यते वेदवेदिभिः' इति। त्वद्रूपामिति तथा च पदार्थत्रितयात्मकप्रपंचस्वरूपः परमशिव एवेति पशुपाशपतित्रयात्मकत्वात्पशुपतिरित्यर्थः। अथवा पशवः ब्रह्मादिस्थावरांताः प्राणिनस्तेषां पतिर्नियामकः पशुत्वविमोचकश्चेत्यभिप्रेत्याह नाथ जीवान्नियमयसीति तदुक्तं लैंगे 'ब्रह्माद्याः स्थावरांताश्च देवदेवस्य शूलिनः॥ पशवः परिकीर्त्यंते संसारवशवर्तिनः' इति। नाथेति संबुद्धिः। नुतः पशुभिः स्तुतः संस्थान्मुक्तांश्च कुरुषे अनाद्यविद्यावासनात्मकसंसारपाशबंधनशून्यान्करोषीत्यर्थः। अथ वा गवाश्वादिपशूनां पतिराधिपतिः स्वामीत्यर्थ इत्याशयेनाह ग्राम्यारण्येति ग्राम्या ग्रामोद्भवा' सात्त्विका भावाः गवादयः आरण्याः अरण्योद्भवाः क्रूरभावाः सिंहव्याघ्रादयश्च तेषां यदाधिपत्यं स्रष्टृत्वपालकत्वादिरूपं तद्वहसीत्यर्थः तथाचोक्तं हरिवंशे 'पालयामि पशून्यस्मात्सृजामि च यदृच्छया॥ तेषां च परितो वाहं तस्मात्पशुपतिः स्मृत' इति। अथवा पशुपतिरिति परशिवाष्टमूर्त्यंतर्गतात्मयजमानाभिमानिमूर्तिविशेष एवेत्याशयेनाह यजमानात्माभिमतिमानिति। तदुक्तं वायुसंहितायां 'सर्वात्मनामधिष्ठात्री सर्वक्षेत्रनिवासिनी॥ मूर्तिः पशुपतेर्ज्ञेया पशुपाशनिकृंतनी' इति अथवा नेपालाख्ये महापीठे पशुपतीश्वर इति प्रसिद्धिबलात्तथेत्याह भक्तानिति रमयसि आनंदयसि स्पष्टमन्यत्। सुवदनाख्यं वृत्तमिदं तदुक्तं भगवतापिंगलेन सूत्रं 'सुवदना म्रौ भ्नौ म्भौ लगौ स्वरक्षर्षिरसाः' तथा केदारोक्तिः 'ज्ञेयाः सप्ताश्वषड्भिर्मरभनमयुताभ्लौगः सुवदना' इतिलक्ष्मसाम्यात्प्रतिपादं मगणः रगणः भगणः नगणः मगणः भगणः लघुर्गुरुश्च सप्तभिः सप्तभिश्च षड्भिर्यतिरित्येतद्वृत्तं सुवदनाख्यं विंशत्यक्षरपादात्मकं भवतीत्यर्थः॥ ९२॥

## ॐ देवाय नमः

द्युतिमोदव्यवहारात्सुरजातिप्रवतारात्॥
शशिमौले जगतीनामधिपत्वादपि देवः॥ ९३॥

दीव्यतीतिदेवः दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकांतिगतिष्वितिधात्वर्थाभिप्रायेणाह द्युतिमोदेत्यादि द्युतिर्दीप्तिः मोद आनंदः व्यवहारो व्यवहृतिः प्रवृत्त्यादिरूपेणेति यावत्। द्युतिर्मोदो व्यवहारश्चेति तेषां समाहारस्तस्मादिति समाहारद्वंद्वः। द्युतिमोदसहितव्यवहारादिति मध्यमपदलोपी वा समासः। तथा च दैदीप्यमानः आनंदवान्व्यवहृतिमांश्चेत्यर्थः। नन्वेतावता द्युत्यामोदप्रदर्शनेन धात्वर्थोपपादनेऽपि कथं देवशब्दप्रवृत्तिविषयत्वं परमशिवस्य तत्प्रवृत्तिनिमित्ततायाः देवत्वजातेः शरीरविशेषवृत्तितया तत्र तदसंभवादित्याशंक्याह सुरजातिप्रवतारादितियथाच 'मनुष्योऽहं ब्राह्मणो जानामि' इत्यादौ शरीरगतमानुषत्वजात्यादिकमादायात्मन्यहमितिप्रयोगस्तथा देवजातिमादायापि परमशिवे देवपदप्रवृत्तिविषयत्वं सूपपन्नमिति भावः। अथवा 'राजा भट्टारको देव' इतिकोषात्प्रभुसस्वामिपर्यायो देवशब्दः सर्वाधिपत्यं बोधयतीत्याह जगतीनामिति। लोकानामित्यर्थः। तथाच श्रुतिः 'सर्वेश्वरः शंभुराकाशमध्यः सर्वाधिपत्यं कुरुते महात्मा' इति च। शशिमौले इति संबुद्धिः स्पष्टमन्यत्। मोदाख्यं वृत्तमिदं तदुक्तमाभियुक्तैः 'सभगा गो यदि मोद' इति। प्रतिपादं सगणः भगणः गुरुद्वयं चेत्येतद्वृत्तं मोदाख्यं भवतीत्यर्थः॥ ९३॥

## ॐमहादेवाय नमः

गीर्वाणानामपि मधुहादीनां नमनीयस्त्वं देवः ॥
शशिबिंबेऽधिष्ठात्री तव मूर्तिर्जगदाप्याययतीति महादेवः ॥ ९४ ॥

महांश्चासौ देवश्चेति महादेवः तत्र महत्त्वं ब्रह्मविष्णवाद्यखिलसुरगणैः नमस्यत्वं स्तुत्यत्वं चेत्या-
शयेनाह गीर्वाणानामपीति मधुहादीनां नमनीयो नमस्कारविषयः स्तवनीयः स्तवनविषयः
तदुक्तं सांबपुराणे 'पुज्यते यः सुरैः सर्वैर्महांश्चैव प्रमाणतः ॥ धातुर्महेति पूजायां महादेवस्ततः
स्मृत' इतिश्रुतिरपि 'तमीश्वराणां परमं महेश्वरं तंदैवतानां परमं च दैवतम्' इति । अथवा महादेव-
मिति चंद्राधिष्ठातृमूर्तिविशेष एवेत्याह शशिबिंब इति चंद्रमंडलांतःसमधिष्ठिता सा महादेवाख्या
मूर्तिरमृतासारेण जगदाप्याययति आनंदयति चेत्यर्थः। तदुक्तं शिवपुराणे 'आप्याययति यो नित्यम-
मृतांशुर्निशाकरः ॥ महादेवस्य सा मूर्तिर्महादेवसमाह्वया' इति। कलहंसीसंज्ञकं वृत्तमिदं तथाचोक्तम-
भिनवरत्नाकरे 'षण्मात्रैस्त्रिभिरुदिता कलहंसी' यत्र प्रतिपादमष्टादशमात्राः संति तत्कलहंसीसं-
ज्ञकं वृत्तं भवतीत्यर्थः ॥ ९४ ॥

## ॐअव्ययाय नमः

न जायसे परिणमसि प्रवर्धसे न हीयसे न च विकृतोऽसि नश्यसि ॥
त्वमव्ययैर्दशभिरपि क्षमादिभिः परिष्कृतः परशिव तेन चाव्ययः ॥ ९५ ॥

व्ययति विविधतया गच्छति जायते अस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीति षड्भा-
वविकारान्प्रतिपद्यत इतिव्ययः नश्वरः पदार्थव्यूहःस न भवतीत्यव्ययः 'यन्नव्येति तदव्यय' इति
गोपथब्राह्मणदर्शितां व्युत्पत्तिमभिप्रेत्याह नजायस इत्यादिना नश्यसीति जन्मादिनाशांताः षड्-
भावविकाराः शरीरस्यावस्थाविशेषाः सार्वजनीनानुभवसिद्धा इति स्पष्टोऽर्थः । अथवा अव्ययानि
प्रागुपदर्शितज्ञानवैराग्यादीन्यस्मिन्संति इत्यव्ययः अव्ययवानित्यर्थः । ज्ञानं विरागमैश्वर्यं तपः
सत्यं क्षमा धृतिः ॥ स्रष्टृत्वमात्मासंबोधो ह्यधिष्ठातृत्वमेव च ॥ अव्ययानि दशैतानि नित्यं
तिष्ठंति शंकरे इति । परिष्कृत इति अलंकृतवानित्यर्थः । स्पष्टमन्यत् । रुचिराख्यं वृत्तमिदं तथा च
सूत्रं 'रुचिराजभौ स्जौग्चतुष्कनगकैः' तथा पिंगलानुसारिकेदारोक्तिः 'चतुर्ग्रहैरिह रुचिरा
जभौ स्जौ ग्' इति । प्रतिपादं जगणः भगणः सगणः जगणः गुरुश्चेतुर्भिर्नवभिर्यतिरित्येवं वृत्तं रुचि-
राख्यं भवतीत्यर्थः ॥ ९५ ॥

## ॐहरयेनमः

पशिर तव नामसंकीर्तने कश्चिद्गुपिनतेनसां पारना ॥
[illegible] हरति च दुरितानि स त्वं हरिः ॥ ९६ ॥

दृष्टांतपूर्वकं परमशिवस्य हरपदवाच्यत्वमुपपादयति पराशिवेति जनयसीति भवत्यस्मात्सर्वमिति व्युत्पत्त्या उत्पादयसीत्यर्थः। स्थिरमपि उत्पन्नस्य स्थितिमपि चरयसि मृडयति सुखयतीति व्युत्पत्त्या सुखयसि सुखवत्करोषीत्यर्थः । सुचरं जंगममचर स्थावरं स्थावरजंगमात्मकप्रपंचमात्रमित्यर्थः । चरमगुणधरः चरमगुणस्तमोगुणस्तद्वान्प्रहरसि उपसंहरसीत्यर्थः । मणिगुणनिकराख्यं वृत्तमिदं तथा च पैंगलसूत्रं 'मणिगुणनिकरो वस्वृषयः' अत्र चंद्रावर्तात्सूत्रात् 'नौनौस्' इत्यनुवर्तते । तथा च प्रतिपादं नगणचतुष्टयं सगणोऽष्टाभिः सप्तभिश्च यतिरित्येतद्वृत्तं मणिगुणनिकराख्यं भवतीत्यर्थः तथाच केदारे लक्ष्यं 'वसुहययतिरितिमणिगुणनिकरम्' इति ॥ १०० ॥

अथ च नामश्लोकः ॥

भगनेत्रभिदव्यक्तः सहस्राक्षः सहस्रपात् ॥ अपवर्गप्रदोऽनंतस्तारकः परमेश्वरः ॥
इतिचावशिष्टनामाष्टकं निर्वक्ति

## ॐभगनेत्रभिदे नमः

विष्णुब्रह्माद्यखिलदिविषत्कृतेमखमंडपे
वीरं भद्रापतिमुपगतं सुरासुरमर्दनम् ॥
कोपाटोपादरुणनयनो भगस्तमदीदृश-
त्तन्नेत्रे समसभमभिनत्ततो भगनेत्रभित् ॥ १०१ ॥

विष्णित्यादिना विष्णुब्रह्मादयो देवास्तैरखिलैरपि वृते व्याप्ते मखमंडपे यज्ञशालायां भद्रापतिमिति पराशक्तिकोपादाविर्भूतायाः भद्रकाल्याः पतिं स्वामिनं सुरासुरमर्दनं सुराणां नाशकं तथा च दक्षाध्वरविनाशाय परमशिवेन प्रेषितं वीरभद्रमित्यर्थः कोपाटोपात्क्रोधावेशादरुणनयन आरक्तेक्षणो भग. सूर्यमूर्तिविशेषस्तं वीरभद्रं व्यदीदृशत्पुन.पुनरपश्यत् । तन्नेत्रे सूर्यनेत्रे स वीरभद्रः प्रसभं बलात् 'प्रसभं तु बलात्कारो हठः' इत्यमरः । अभिनदिति तथाचोक्तं लैंगे 'दग्धुं वै प्रहितश्चासौ भगवान्परमेष्ठिना ॥ तद्दोष्पाता बभूवुर्वै लोकाना भयशंसिनः ॥ पर्वताश्च व्यशीर्यंत चकंपे च वसुंधरा ॥ मरुतश्चाप्यघूर्णंत चुक्षुभे मकरालयः ॥ अग्नयो वै न दीप्यते न च दीप्यति भास्करः ॥ ग्रहाश्च न प्रकाशंते न देवा न च दानवाः ॥ ततः क्षणात्प्रविश्यैव यज्ञवाटं महामनाः ॥ रोमजैः सहितो भद्रकालामिरिवचापर. ॥ उवाच भगवान्भद्रो दक्ष चामिततेजसम् ॥ सपर्कादेव दक्षस्य मुनिर्देवान्पिनाकिना ॥ दग्धु वै प्रेषितश्चाह भवतश्च मुनीश्वराः । इत्युक्त्वा यज्ञशाला ता ददाह गणपुंगवः ॥ गणेश्वराश्च संक्रुद्धा यूपानुत्पाट्य चिक्षिपु. ॥ गृहीत्वा सत्वरं सर्वान्गगास्रोतसि चिक्षिपुः ॥ वीरभद्रश्चतु पद्दिरोमजैस्तैर्गणैर्वृत. ॥ व्यष्टभयद्दीनात्मा तयान्येपादिवौकसाम् ॥ भगस्य नेत्रे चोत्पाट्य करेणाग्रेण ठीटया ॥ निहत्य मुष्टिना दंतान्पूष्णश्चैव न्यपातयत्' इति । तथा वायवीयसंहितायामपि 'भगस्य विपुले नेत्रे शतपत्रसमप्रभे ॥ प्रसह्योत्पाटयामास भद्र

परमवेगवान्’ इति । सूर्यनामस्यायो भग इत्युक्तः । तत्र प्रामाण्यं ‘ भगं श्रीकाममाहात्म्यवीर्य-
यत्नार्ककीर्तिषु’ इत्यमरः ।। भाराक्रांतावृत्तमिदं तथाचोक्तमभियुक्तैः ‘ भाराक्रांता जलधिषडगै-
र्मभौ नरसालगौ’ प्रतिपादं मगणः भगणः नगणः रगणः सगणः लघुर्गुरुश्चतुर्भिः षड्भिः सप्तभिश्च
यतिरित्येतद्वृत्तं भाराक्रांताख्यं भवतीत्यर्थः ॥ १०१ ॥

## ॐअव्यक्ताय नमः

सांख्ये मूलप्रकृतिरिति यदाचख्यौ
यत्पाराशर्यश्चिदिति गदति तत्त्वं तत्त्वम्
सामष्ट्यं चाक्षरमपि भुवि नैव व्यक्तं
लिंगं बाणाभिधमपि शिव इत्यव्यक्तः ।। १०२ ॥

व्यक्तं न भवतीत्यव्यक्तं परमशिवतत्वमित्यर्थः । तथाच यत्तत्वं सांख्यैर्मूलप्रकृतिरित्याभि-
मन्यते यच्च. वेदांतिभिः पाराशर्यप्रमुखैः चित्प्रकाशात्मकं परं ज्योतीरूपमिति तत्तत्वं स्वरूप-
मेवेत्यव्यक्तस्वरूपः परमशिव इत्याभिप्रेत्याह सांख्य इत्यादि यत्तत्वं सांख्यः मूलप्रकृतिरविकृति-
रिति आचख्यौ इत्यन्वयः । यदाहुः सांख्याः ‘ मूलप्रकृतिरविकृतिर्महादाद्याः प्रकृतिविकृतयः
सप्त ।। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष ’ इति । सूक्ष्मलिंगमचेतनमनादिनिधनं
तथा प्रसवधर्मि निरवयवमेकमेवेति साधारणमेतदव्यक्तमिति ब्रह्मांडपुराणेऽपि ‘ त्रयोविंशतितत्वानि
व्यक्तशब्देन सूरयः ॥ वदंत्यव्यक्तशब्देन प्रकृतिं च परां तथा’ इति । यत्पाराशर्यमिति यत्तत्वंपारा-
शर्यः पराशरात्मजो व्यासः चिदिति गदति चित्प्रकाशात्मकपरंज्योतिः स्वरूपमिति वदती-
त्यर्थः । ‘ तदव्यक्तत्वमाह हि’ इत्यधिकरणे ‘न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा-
वा’ इत्यादिश्रुतिभिस्तथा निर्णयात् । तत्त्वमिति प्रथमं तत्त्वमित्येकं पदं पूर्वेण यत्पदेनान्वितं द्वितीयं
तत्त्वमिति पदद्वयं तादृशं तत्त्वं त्वमेव त्वत्स्वरूपमेवेत्यर्थः । अथवा व्यक्ताव्यक्तात्मकाखिलप्रपंच-
समष्ट्यात्मकत्वादक्षरात्मकत्वाद्बाणलिंगात्मकत्वाद्वा तथा ‘ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव
च ।। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ’ इत्यादिप्रमाणोक्तेरित्यभिप्रायेणाह ‘ साम-
ष्ट्यं चेत्यादि । समष्टिरूपमित्यर्थः । तदुक्तं नृसिंहपुराणे ‘ समष्टिर्विंदुरव्यक्तं व्यक्तं व्यष्टिं मुनी-
श्वराः’ इति । अक्षरमपीति तस्याप्यक्षरत्वमुक्तं तथा च मत्स्यपुराणे उक्तम् ‘ उक्तमक्षरमव्यक्तं
व्यक्तं क्षरमुदाहृतम्’ इति । भुवि नैव व्यक्तमिति । बाणाभिधं यल्लिंगं तद्भुवि अव्यक्तपदवाच्यं-
मित्यर्थः । तदुक्तं ब्रह्मवैवर्ते ‘स्वायंभुवं बाणलिंगं शैललिंगमिति त्रिधा ॥ कीर्तितं व्यक्तमव्यक्तं
व्यक्ताव्यक्तमिति क्रमात् । व्यक्तं मुक्तिप्रदं मुक्तिप्रदमव्यक्तमुच्यते ॥ भुक्तिमुक्तिप्रदं लिंगं व्यक्ता-
व्यक्त प्रचक्षते ॥ द्विसिस्तुलासमारूढं वृद्धिमेति न हीयते ॥ यद्बाणलिंगमुदितं शेषं शैलं विदुर्बुधाः’
इति । शिव इति । एतत्सर्वमव्यक्तपदवाच्यं शिवस्वरूपमेव व्यक्तपदवाच्यत्वं परमशिवस्येत्यर्थ इति ।
कुटिलाख्यं वृत्तमिदं तदुक्तमभियुक्तैः ‘म्नौ भौ न्यौ गौ यदि कुटिलकमुक्तं वृत्तम्’ इति। प्रतिपादं मगणः
भगणः नगणः यगणः गुरुद्वयं चेतद्वृत्तं कुटिलाख्यं भवतीत्यर्थः ॥ १०२ ॥

हरति भक्तानां दुरितानीति हरिः 'इन् सर्वधातुभ्य' इति संहरतेरौणादिक इन्प्रत्ययः। तथा च संकीर्त्यमानं सत्परमाशिवप्रतिपादकं नामैव यद्यशेषदुरितापहारि भवेत्साक्षात्स्वयमेव परमशिवः संसारैकपाशबद्धानपि स्वभक्तान्विमोचयतीत्यत्र किं विचित्रमितिकैमुतिकन्यायमभिप्रेत्याह परशिवेति कलिकलुषितचेतसां कलिना कालिप्रयुक्तपापेन कलुषितानि दूषितानि चेतांस्यंतः करणानि येषां कलिमलग्रस्तचित्तानां पुरुषाधमानामपि त्वन्नामसंकीर्तनं पावनं पापनोदकरमिति बहुश्रुतिस्मृतीतिहासादिषु प्रसिद्धमित्यर्थः। अथवा हरिश्चंद्राख्ये क्षेत्रविशेषे हरीश्वरः इति प्रसिद्धिबलात्तथेत्याह निवसतीति हरसि च दुरितानीति हरिशब्दव्युत्पत्तिप्रदर्शनपरम्। प्रमुदितवदनाख्यं वृत्तमिदं तदुक्तमभियुक्तैः 'प्रमुदितवदना भवेन्नौररौचेत्' इति। प्रतिपादं नगणद्वयं रगणद्वयं चैतद्वृत्तं प्रमुदितवदनाख्यं भवतीत्यर्थः ॥ ९६ ॥

## ॐपूषदंतभिदे नमः ॥

अधिमखं रदविकासपूर्वकं परिहसंतमवलोक्य पूषणम् ॥
शिव भवानकृत पिष्टभागिनं दलितदंतमिति पूषदंतभित् ॥ ९७ ॥

पूष्णः सूर्यस्य दंतान् भिनत्त्युत्पातयतीति पूषदंतभिदित्यत्र दंतोत्पाटनहेतुभूतमपराधं दर्शयन्नाह अधिमखमिति यज्ञमध्य इत्यर्थः। रदविकासपूर्वकं दंतप्रकाशपूर्वकं परिहसंतं पूषणं सूर्यद्वादशकेष्वेकं तथा च पुराहि दक्षाध्वरशालामुपगतानसंख्यान्महर्षिप्रभृतीन्सुरगणानौदासीन्येन परमशिवमुपहासपूर्वकं सहासमपमन्यमानानवलोक्य परमदारुणभावेन संवर्तसमयप्रज्वालितकालाग्निप्राकारेण घोरवीरभद्रावतारेण पुनः स्वयमेव शिवस्तान्यथोपहासमशिक्षयत्। तत्र च दंतानादाय परिहसितं पूष्णेति दंताःपातिताः इत्यादिकं तत्तत्पुराणेषु स्पष्टं प्रतिपादितं तथा च लैंगे 'वीरभद्रश्चतुःषष्टीरोमजैस्तैर्गणैर्वृतः॥ व्यष्टंभयद्दीनात्मा तथान्येषां दिवौकसाम् भगस्य नेत्रे चोत्पाट्य करेणाग्रेणलीलया॥ निहत्य मुष्टिना दंताः पूष्णश्चैव न्यपातयत्' इति। शिवपुराणे 'पूष्णो दशनपंक्तिं च दिव्यां मुक्तावलीमिव॥ बिभेद धनुषः कोट्या ततः सोऽस्पष्टवागभूत्॥' इति। शिवेति संबुद्धिः हे परमशिव भवान्नालितदंतं दंतशून्यं पूषणं पिष्टभागिनं अकृत कृतवानित्यर्थः। तथा च श्रुतिः 'पूषाः प्रपिष्टभागदंतको हि सः' इति। स्पष्टार्थमन्यत्। प्रियंवदाख्यं वृत्तमिदं तथाचोक्तमभियुक्तैः 'भुवि भवेन्नभजरैः प्रियंवदा' इति प्रतिपादं नगणः भगणः जगणः रगणश्चैतद्वृत्तं प्रियंवदाख्यं भवतीत्यर्थः ॥ ९७ ॥

## ॐअव्यग्राय नमः

पौलस्त्येनोन्नमनसमये कैलासाद्रेर्ब्रह्मांडानामपि दहनकाले संवर्ते ॥
युद्धेष्वन्येष्वपि बहुषु संतोषोद्रेकाद्देवीं पश्यन्नासि शिव तस्मादव्यग्रः ॥ ९८ ॥

व्यग्रो विभ्रान्तचित्तः न भवति इत्यव्यग्रः। निश्चित इत्यर्थः। इत्यभिप्रेत्याह पौलस्त्येनेति पौलस्त्यः पुलस्त्यवंशोद्भवो दशाननस्तेन कैलासाद्रेरुन्नमनसमये उच्चालनसमये देवीं पश्यन्नटतीत्युत्तरेण संबंधः। ब्रह्मांडानां चतुर्दशभुवनानामपि दहनकाले संवर्ते प्रलयसमय इत्यर्थः 'संवर्तः

न्यः कल्प › इत्यमरः युद्धेष्वन्येष्विति त्रैपुरादीषु युद्धेषु कालकूटाशनायशक्यकार्येषु चेत्यर्थः । तोपोद्रेकात्संतोपातिशयात् । एवंरूपेष्वपि कार्यकरणेष्वतिशयितसंतोषवत्त्वादव्यग्रत्वं परम-शिवस्येत्यर्थः । हंसश्येनीसंज्ञकं वृत्तमिदं तदुक्तमभियुक्तैः 'मौ मौ न्मौ गौ यदि निगदिता हंसश्ये नौ' इति । प्रतिपादं मगणः नगण. मगणः गुरुद्वयं चैतद्वृत्तं हंसश्येनीसंज्ञकं भवतीत्यर्थः । अस्मि-न्वृत्ते यः चतुर्थगणो मगणः सः कचित्पाठांतरभेदेन यगणो भवति ॥ ९८ ॥

## ॐदक्षाध्वरहराय नमः

पुरा देवो दक्ष इति शिव तवैकः श्वशुरकः
परो मर्त्यो दक्ष इति विटपिकन्योदरभवः ॥
प्रचेतःपुत्रोऽखिलमखफलदातापि च भवां-
स्तयोर्यज्ञौ हा व्यदलयदिति दक्षाध्वरहरः ॥ ९९ ॥

अत्र दक्षो द्विविधः अमानुषो मानुषश्च तत्रामानुषो दक्षः प्रजापतित्वेन प्रसिद्धः यस्य जामातृत्वमापन्नः परमशिवोऽपि मानुषश्च राजा तस्यैव अवतारविशेषः तयोरध्वरौ हरति नाशयतीति दक्षाध्वरहर इत्यभिप्रेत्याह दक्षपदार्थावेव आदौ दर्शयति पुरा देव इति । श्वशुरकेत्यत्र स्वार्थे कुत्सिते वा कप्रत्ययः । शिवद्रोही श्वशुर इत्यर्थः । विटपिकन्योदरभव इति । स एव दक्षः कचित्कुपितेन परमशिवेन शासिना कन्यायां त्वं भवितेति शप्तः सन्विटपिकन्योदरान्मानुषत्वं प्राप्त इत्यर्थः । तदुक्तं ब्रह्मपुराणवायुपुराणयोः 'अभिव्याहृत्य सप्तर्षीन्दक्षं सोऽभ्यशपत्पुनः ॥ भविता मानुषो राजा चाक्षुषस्य त्वमन्वये ॥ प्राचिनबर्हिषः पौत्रः पुत्रश्चैव प्रचेतसः ॥ दक्ष इत्येव नाम्ना त्वं मारिषाया जनिष्यसि ॥ कन्यायां शासिना चैव प्राप्ते वै चाक्षुषांतरे । अहं तत्रापि ते यज्ञं हन्मि देव्याः प्रियेक्षया › इति । चाक्षुषस्य चतुर्दशमन्वंतर्गतस्य मनुविशेषस्य वंशे त्वं भवितेति शप्तवानित्यर्थः । अखिलेति तयोः मानुषामानुषयोर्दक्षयोर्यज्ञाविति तथाचाखिलस्याप्यध्वरस्य फलं स्वर्गादिरूपाभिमतार्थसिद्धिं प्रयच्छन्नपि यज्ञौ व्यदयलद्विनाशयदित्यध्वरकारकस्तत्संहारकश्चेत्याश्चर्यकरं भवच्चरित्रमचिंत्यमित्यभिप्रेत्याह हा इति विषादशुगर्तिष्वव्ययं स्पष्टमन्यत् । कलातंत्राख्यं वृत्तमिदं तथाचोक्तमभियुक्तैः ' कलातंत्रं यो तनसभलघुभिर्गेन सहितम्› इति प्रतिपादं यगणः तगणः नगणः सगणः भगणः लघुर्गुरुश्चैतद्वृत्तं कलातंत्राख्यं भवतीत्यर्थः ॥९९॥

## ॐहराय नमः

परशिव जनयसि भव इति भणितः स्थिरमपि चरयसि मृडपदगणितः ॥
सुचरमचरमपि चरमगुणधरः प्रहरसि जगदिदमखिलमिति हरः ॥ १०० ॥

सृष्टिस्थित्युपसंहाराख्यं कार्यकारिण्यो भवमृडहराख्यास्तिस्रो मूर्तयः परमशिवस्य तत्र रजोगुणेन भवमूर्त्या सत्वगुणेन मृडमूर्त्या प्रथमकार्यं सृष्टिं द्वितीयं चास्थितिं यथा करोति तथा तमोगुणेन हरमूर्त्या संहाराख्यं तृतीयकार्यमपि करोतीति हरः उपसंहरत्यखिलमिति हरः अत्र च

## ॐसहस्राक्षाय नमः

अगणितकरचरणशिरोदंष्ट्रोदरयुक्मतिभयमाश्चर्यं
युगपत्सृष्टिस्थितिलयकारि यदवच्छेदकभेदेन ॥
क्षेत्रे च सुवर्णाख्ये प्रथितं लिंगे शिव तव यद्रूपं
बहुविधकर्मज्ञानेन्द्रियपरिपूर्णं तदिति सहस्राक्षः ॥ १०३ ॥

अक्षशब्दः इंद्रियसामान्यपरः। सहस्रशब्दश्चानंत्यपरः। 'शत सहस्रमयुतमित्याद्यानंत्यवाचकम्' इत्युक्तेः। सहस्राण्यनंतानि अक्षाणि इंद्रियाणि यस्येत्यत्र सहस्रपदप्रयोगादर्थांतरमपि सूचयन्नाह अगणितेत्यादि अगणितैरसंख्यातैः करचरणशिरोदंष्ट्रोदराद्यवयवैर्युक्तं प्रतिभयं भयकरं 'भयंकरं प्रतिभयम्' इत्यमरः। आश्चर्यकरं आनंदकारीति यावत्। अत्र हेतुमाह युगपदीति एककालावच्छेदेन सृष्टिस्थितिलयाख्यानि कार्याणि करोत्याजगति तथा। ननु परस्परविरुद्धानां सृष्टिस्थित्युपसंहारादिकार्यविशेषाणां कथमेककालावच्छेदेनोपपत्तिरित्याशंक्य औपाधिकभेदान्न विरोध इत्याह यदवच्छेदकभेदेनेति यदिति प्रत्येकं पदं यद्रूपमुपदर्शितरीत्या विविधाश्चर्यकरमित्यर्थः। अवच्छेदकभेदेन उपाधिभेदेन क्षेत्रेति यच्च रूपं सुवर्णाभिधे क्षेत्रविशेषे सहस्राक्षेश्वरत्वेन प्रसिद्धं यद्रूपं बहुविधैरनेकप्रकारैः कर्मेंद्रियैः ज्ञानेंद्रियैश्च परिपूर्णं ख्यातं तद्रूपं तवेति पूर्वत्रान्वयाति तथाच यद्रूपं श्रुतिस्मृत्यादौ गीयमानमनेकाकार तत्सर्वं त्वदीयमेवेति भवति सहस्राक्षत्वं परमशिवस्येत्यर्थः। प्रपंचशरीरकस्य सर्वांतर्यामिणो भगवतः परमशिवस्य सहस्राक्षादिकं प्रतिपादितं श्रुत्यादिभिः यथा 'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ॥ सर्वव्यापि च भगवास्तस्मात्सर्वगतः शिवः' ॥ 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुतविश्वतस्पात् ॥ 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' तथा च गीतायामपि भगवद्वचनं 'सर्वतः पाणिपाद तत्सर्वतोऽक्षिशिरोमुखम् ॥ सर्वतः श्रुतिमंल्लोके सर्वमावृत्य तिष्ठति'। इद च आनंदनामकं वृत्तम्। (१) मात्राचतुष्टयपरः ननु मयादिपरः तथा च अर्धमात्रागणसहितैः सप्तगणैः प्रतिपादं त्रिंशत्संख्याकाः मात्राः द्वाविंशत्या अष्टभिश्च यतिरित्येतद्वृत्तमानंदनामकं मात्रावृत्तं भवतीत्यर्थः। अत्र षोडशभिश्चतुर्दशभिश्च यतिरितिविशेषो द्रष्टव्यः। इदं च श्रुतिप्रसिद्धं नाम 'नमोऽस्तुनीलग्रीवाय सहस्राक्षाय मीढुषे' इति ॥ १०३ ॥

## ॐसहस्रपदे नमः

जगदवनार्थमष्टसु धृतासु मूर्तिषु स्मरहर भास्करस्य तव मूर्तिरष्टमी ॥
गणनपथातिगांघ्रिमयविश्वरूपधृक् श्रुतिगदितोऽसि शंकर ततः सहस्रपात् ॥ १०४ ॥

सहस्राणि पादाः किरणाः यस्येति सहस्रपात्। सूर्यात्मक इत्यभिप्रेत्याह जगदवनेत्यादि जगद्रक्षणार्थं शर्वभवरुद्राद्यष्टमूर्तिषु त्वया धृताष्टमीय सूर्यमूर्तिस्त्वदीयेत्यर्थः। अथवा सहस्रशब्दः अनंतपरः सहस्राण्यनंताः पादाश्चरणाः यस्येति तथेत्याभिप्रयेणाह गणनपथेति गणनानामेकत्वादि-

पैराधपयतानां यः पंथास्तदतिक्रांता ये अंघ्रयः पादास्तद्घटितं विश्वरूपं धारयतीति तथा एत-
त्सहस्राक्षपदे व्याख्यातं श्रुतिगदितः ' सहस्राक्षः सहस्रपाद् ' इत्यादि स्पष्टमन्यत् । प्रभद्रकं वृत्तमिदं
तदुक्तमभियुक्तैः ' भवति नजौ भजौ रसहितौ प्रभद्रकं च ' इति । प्रतिपादं नगणः जगणः
गणः जगणः रगणश्चैतद्वृत्तं प्रभद्रकं भवतीत्यर्थः ॥ १०४ ॥

## ॐअपवर्गप्रदाय नमः

प्रतीकविदहंग्रहो भृतक इत्युपास्तेर्निजा-
द्विधेः शिवसलोकता शिवतदात्मता सार्ष्टिता ॥
भवंति ससमीपता अमृततात्मविज्ञानतोऽ-
खिलं फलमतो भवेदिति मतोऽपवर्गप्रदः ॥ १०५ ॥

अपवर्गान्सालोक्यसायुज्यसारूप्यसामीप्यकैवल्याख्याः पंचविधमुक्तीः प्रददात्युपासकेभ्य इत्य-
पवर्गप्रदः । तत्र पंचविधमुक्तीस्तत्साधनीभूतोपासनानि च प्रदर्शयति प्रतीकविदिति भृतकः
सेवकः निजाद्विधेः स्वस्वाश्रमविहिततत्तत्कर्मोपासनाविधेः । तथा च प्रतीकोपासना अहंग्रहोपा-
सना सेव्यसेवकभावोपासना स्वस्वाश्रमविहितकर्मोपासना चतुष्टयं साधनत्वेनोपन्यस्य तत्फलान्यपि
क्रमेणोपदर्शयति शिवसलोकतेत्यादि । सलोकता सालोक्यं तदात्मता सायुज्यं सार्ष्टिता सारूप्यं
समानधर्मितेति यावत् । तथा च तदात्मता च सार्ष्टिता चेति द्वंद्वोत्तरं शिवपदेन षष्ठीतत्पुरुषः ।
ततः शिवसलोकता च शिवतदात्मतासार्ष्टिते चेति पुनर्द्वंद्वः । एताश्च ससमीपताः सामीप्येन
सहिताः भवंतीत्यन्वयः । शिवसालोक्यं शिवसायुज्यं शिवसारूप्यं शिवसामीप्यं च क्रमेण भवन्ति
फलानीत्यर्थः । अत्र च प्रतीकेष्ववयवेषु वाङ्मनःप्रभृतिषु देवतोपासनं तस्य फलं सालोक्यं
सर्वज्ञत्वसर्वेश्वरत्वाद्यनंतगुणगणके सगुणब्रह्मणि अहमेवेत्युपासनमहंग्रहोपासनं तस्य फलं सायुज्यं
प्रतीकविदहंग्रहाभ्यां विना स्वात्मनः प्रत्यक्त्वेनैश्वर्यविशेषविशिष्टतयोत्कर्षापकर्षपूर्वकमुपासनं
भृतकोपासनं तस्य फलं सारूप्यमेव सार्ष्टितेत्युच्यते । तथा च तैत्तेरीयश्रुतिः 'एतासामेवं देवताना
सायुज्यं सार्ष्टितां समानलोकतामाप्नोति' इति कर्मोपासनफलसामीप्यं तथा च माण्डूकश्रुतिः 'तपः
श्राद्धे ये ह्युपवसंत्यरण्ये शांता विद्वांसो भैक्ष्यं चरंतः सूर्यद्वारेण ते रजः प्रयाति यत्रामृतः स
पुरुषोऽव्ययात्मा ' इति एताश्च कर्मफलभूताः सातिशयाः अनित्याश्चेत्यवगंतव्यम् । इत्येवं सगुण-
ब्रह्मोपासनादि फलमुक्त्वा निर्गुणब्रह्मोपासनायाः नित्यनिरतिशयानंदचित्प्रकाशादे परंज्योतिः-
स्वरूपेणावस्थानलक्षणं कैवल्याख्यमपवर्गमाह अमृततेति तद्धेतुमाह आत्मविज्ञानत इति । इदमेव
निर्गुणब्रह्मोपासनामित्युच्यते तथा च तैत्तिरीयश्रुतिः 'एवंविद्वानुदगयने प्रमीयते देवानामेव
महिमानं गत्वादित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते स पितृणामेव महिमानं गत्वा
चंद्रमसः सायुज्यं सलोकतामाप्नोत्येतौ वै सूर्याचंद्रमसोर्महिमानो ब्रह्मणो विद्वानभिजयति
तस्माद्ब्रह्मणो महिमानमाप्नोति' इत्यत्र केवलकर्मणा चंद्रलोक[illegible] य एवं विद्वानिति विद्वदन्वा-

भिहितप्रतीकाद्युपासनात्र यावंतो देवानामहिमानमित्यनेन सालोक्यादित्रयं ब्रह्मणो विद्वानित्यनेन ब्रह्मज्ञानवांस्तु एतौ कर्मोपासनाप्राप्यौ सूर्यचंद्रयोर्महिमानौ सातिशयत्वादिदोषवंतौ बुद्ध्या-अभिजयति अभितः पराकरोति तस्मादधिकं निरातिशयिनं ब्रह्मणो महिमानमाप्नोतीत्यर्थः । तथोक्तं शक्तिरहस्ये 'आत्मबुद्ध्या प्रतीकेन मातृबुद्ध्याप्यहं धिया ॥ कर्मणा वा भजन्मर्त्यः कैवल्यपदमश्नुते' इत्यखिलं फलमितिदर्शितदिशा सालोक्यादिपंचविधमप्यपवर्गफलं परमशिवादेव भवतीत्यपवर्गप्रदत्वं परमशिवस्येत्यर्थः । पृथ्वीसंज्ञकं वृत्तमिदं तथाच पैंगलसूत्रं ' पृथ्वी ज्सौ ज्सौ य्लौ ग्वनवःौ' । तथा च केदारे 'जसौ जसुयलावसुग्रहयतिश्च पृथ्वी गुरुः' इति । प्रतिपादं जगणः सगणः जगणः सगणः यगणः लघुर्गुरुश्चाष्टाभिर्नवभिश्च यतिरिति पृथ्वीसंज्ञकं वृत्तं भवतीत्यर्थः ॥ १०५ ॥

## ॐअनंताय नमः

नात्रेति विभो नेदानीमिति नेदं ब्रह्मेति न वाचो यत्र प्रसरंति ॥
नास्त्येव गुणानामंतो न विभूतेः शेषोऽसि धराधृक्तेन त्वमनंतः ॥ १०६ ॥

अंतः परिच्छेदः स च देशतः कालतो वस्तुतश्चेति त्रिविधः स न विद्यते यस्मिन्नित्यनंतः नात्रेति ब्रह्मेत्यनेनान्वयः । नास्मिन्देशे ब्रह्म नास्मिन्काले ब्रह्म नेदं ब्रह्मेति वाचो यत्र यस्मिन्विषये न प्रसरंति त्रिविधपरिच्छेदशून्य इत्यर्थः । 'नित्यो नित्यानां चेतनश्चेतनानां सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः न स्त्री षंढो न पुमान्' इत्यादि । अथवा गुणानां विभूतीनां वा अंतः अवसानं नाशो वा यस्मिन्न विद्यते नित्यनिरवधिकैश्वर्यगुणवानित्याभिप्रेत्याह नास्त्येव गुणानामिति 'नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप' इति गीतासु । अथवा जगदुद्धारणार्थमवतीर्णः आदिशेषो वा अनंत इत्याह शेषोऽसीति स्पष्टमन्यत् । इदं च श्रुतिप्रसिद्धं नाम 'सत्यं ज्ञानमनंतं ब्रह्म' इति । मणिमालाख्यं वृत्तमिदं तथा च पैंगलसूत्र ' मणिमाला त्यौ त्यौ । ' तथा च वृत्तरत्नाकरे ' त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ' इतिचोभयसंमत्यात्प्रतिपादं तगणः यगणः तगणः यगणश्चेतद्वृत्तं मणिमालाख्यं भवतीत्यर्थः । अस्मिन्वृत्ते षड्भिः षड्भिर्यतिरिति ॥ १०६ ॥

## ॐतारकाय नमः

तव पदकमले भजंतो जनास्तारिता यत्त्वया
भवजलनिधितो महादेव ताराख्यवर्णात्मकः ॥
प्रणवमुपदिशन्दिगन्काशिकायां परेतानपि
श्रुतिषु निगदितस्तदन्वर्थनामाभवंस्तारकः ॥ १०७ ॥

तारयत्युपासकान्संसारादिति तारकः । तारयतेर्ण्वुलित्याशयेनाह तव पदकमले इति । द्वितीयाद्विवचनमिदं । भजधातोः सकर्मकत्वाद्भवजलनिधितः संसार...

त्रयः । यदिति यद्यस्माद्धेतोः संसाराब्धेस्तारिताः सर्वेऽप्युपासकाः अतस्त्वं तारक इत्यर्थः । अथवा नार एव तारकः तारयतेः पचाद्यचि स्वार्थे कप्रत्ययः प्रणवात्मक इत्यर्थः । अत एव श्रुतावपि तार इत्येव श्रूयते ' नमस्ताराय नमः शंभवे च ' इति । अथर्वशिरस्यपि 'अथ कस्मादुच्यते तार इति' यद्वा तारः प्रणवस्तत्स्वरूप इत्यभिप्रायेणाह प्रणवमुपदिशन्निति अत एवोक्तम् 'अनिलो मृगनाभिरेणुगन्धिर्हरवामांगकुचोत्तरीयजन्मा ॥ हरते मरणश्रमं जनानामधिकाशि प्रणवोपदेशकाले ' इति । काशिकायां परेतानिति काश्यां मृतिप्राप्तान् । द्विजान्प्रणवोपदेशेन परमगतिं प्रापयंस्तारक इति श्रुतिषु निगदितोऽसीत्यर्थः । तथाचोक्तं जाबालश्रुतौ ' अत्र हि जन्तोः प्राणेषूत्क्रमणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति ' इति । द्विजशब्दस्त्रैवर्णिकपरः । अन्येषां प्रणवे अनधिकारात् । अतएव तेषां रामनामोपदेश इति व्यवस्था ग्रन्थान्तरकारैरुपदर्शिता । प्रणवरामशब्दयोः ब्रह्मैकबोधकत्वाच्छ्रुतौ तारकं ब्रह्मेति तूभयसाधारणमिति । परेतानपीत्यपिना मरणे ज्ञानशून्यानपि जंतून्यदि मोचयसि किमु तर्हि साक्षाद्भजनैकसाधनावधूतकल्मषानुन्मिषद्धियांकुरान्नरवरांस्तथा करोषीत्यत्र किमु वक्तव्यमित्ययमर्थः सूचितः । स्पष्टं शिष्टम् ' लालसाख्यं वृत्तमिदं तथाच पैंगलैरुक्तं ' दशवसुविरतिर्नना रैश्चतुर्भिर्युतौ लालसाव्हयम् ' इति प्रतिपादं नगणः रगण चतुष्टयं च दशभिरष्टभिश्च यतिरित्येतद्वृत्तं लालसाख्यं भवतीत्यर्थः ॥ १०७ ॥

## ॐपरमेश्वराय नमः

ग्रामाणां पतयोऽपि सोपपदेश्वरा भुवि भूरिश-
स्तेऽपि स्वाश्रितमात्रपोषणपरास्तथैव दिवौकसः ॥
ईशानामपि चेशितासि निजाश्रिताश्रिततज्झिता-
न्सर्वानप्यवसीशतापरमावधिः परमेश्वरः ॥ १०८ ॥

परमश्चासावीश्वरश्चेति कर्मधारयः । नियामकत्वलक्षणे संरक्षकत्वलक्षणे चेश्वरत्वे । परत्वं च नियामकांतरासंभावनत्वविषयत्वमखिलजगत्कर्मकसंरक्षकत्वं चेत्याशयेनाह ग्रामाणां पतय इत्यादि ग्रामाणां पतयोऽसीत्यपिना नानानगरदेशद्वीपलोकादीनां समुच्चयः । पतयः ईश्वराः सोपपदेश्वराः सावधिकेश्वराः । तथा च ग्रामस्य नगरस्य द्वीपस्य लोकस्य वा नियामकत्वेन ईश्वरत्वाभिमानिनो ये केचित्सर्वेऽपि नियामकांतरसंभावनाविषयीकृता एवेति नैषां निरवधिकत्वमीश्वरत्वं संभवतीत्युक्त्वा सर्वजनसंरक्षकत्वलक्षणं द्वितीयमपीश्वरत्वं नास्तीत्याह तेऽपीति ते ऽपि ग्रामाद्यधिपतयोऽपि स्वाश्रितमात्रपोषणपराः ग्रामादीनामेव पोषणे समर्थाः । न तु सर्वान्पोषयितुं यथा एवं च सर्वजनसंरक्षकत्वलक्षणं द्वितीयमीश्वरत्वमपि नैव तेषां संभवतीति भावः । तथैव दिवौकसः देवादयोऽपि स्वार्गिका एवमेव दर्शिताद्द्विविधैश्वर्यशून्या एवेति भावः । एवं च कृतानां देवातिर्यङ्मनुष्याणां ' बोधकत्वमेकं सिद्ध्यति ' इतिन्यायात् । परमशिवस्यैव तादृशोभयविधमैश्वर्यं संभवतीत्याह ईशानामपीति ईशानां नियामकत्वेन चोपदर्शितानां तत्तदादिग्रामलोकादीनामीशिता निया-

मकः । तथा चार्थतः सर्वेषां नियामक इतिपर्यवसानान्नियामकांतरासंभावनाविषयीभूतेश्वरत्वलक्षणपारमैश्वर्यमायमुक्तं भवति । निजाश्रितेत्यादि निजं स्वमाश्रिताः ये देवातिर्यङ्मनुष्यादयस्तदाश्रिताश्च ये पुनस्तानप्याश्रितास्तथा च साक्षात्परंपरया सर्वानपि लोकानवसि रक्षसीति सर्वलोकसंरक्षणकर्तृत्वरूपं द्वितीयमपि पारमैश्वर्यमुक्तं भवति अत एवाह ईशतापरमावधिरिति ईशता ईशनं नियामकत्वं संरक्षत्वं चेत्यन्यदेवतस्य परमावधिर्यदपेक्षया नियामकः संरक्षको वा नास्ति तादृशः परमेश्वर इत्यर्थः । हरिणप्लुताख्यं वृत्तमिदं तदुक्तमभियुक्तैः ' मात्सोजो जभरौ च दांतिशरेषुभिर्हरिणप्लुता ' इति । प्रतिपादं मगणः सगणः जगणद्वयं भगणः रगणश्चाष्टाभिः पंचभिश्च यतिरित्येतद्वृत्तं हरिणप्लुताख्यं भवतीत्यर्थः ॥ १०८ ॥ ॥ श्रीसांबं वंदे ॥

# अथैतदुत्तरभागः

शिवरहस्यपठितो व्याक्रियते यथा ।

इमानि दिव्यनामानि जप्यंते सर्वदा मया ॥
नामकल्पलतेयं मे सर्वाभीष्टप्रदायिनी ॥

इमानि उपदर्शिताष्टोत्तरसंख्याकानि सर्वदा कालत्रयेऽपि मया विष्णुना ।

नामान्येतानि सुभगे शिवदानि न संशयः ॥
वेदसर्वस्वभूतानि नामान्येतानि वस्तुतः ॥
एतानि यानि नामानि तानि सर्वार्थदान्यतः ॥
जप्यंते सादरं नित्यं मया नियमपूर्वकम् ॥
वेदेषु शिवनामानि श्रेष्ठान्यघहराणि च ॥
संत्यनंतानि सुभगे वेदेषु विविधेष्वपि ॥

विविधशाखात्मकेषु वेदेष्वित्यर्थः ।

अष्टोत्तरसहस्रं तु नाम्नामुपदिशत्पुरा ॥
ततोऽपि सारमुद्धृत्याब्रवीदष्टोत्तरं शतम् ॥

अडभावश्छांदसः ।

मूलम् ।

तानि नामानि जप्यंते मया प्रत्यहमादरात् ॥
इत्युक्त्वा प्राणिपत्यांबां संपूज्य च जनार्दनः ॥
ततो जगाम वैकुंठं प्रेरितो जगदंबया ॥
चिरमाराधयंती सा गिरिजापि ततः शिवम् ॥

संप्राप्ता शिवरूपं सा भूयः प्राप्तशिवापि सा ॥

नित्यप्राप्तशिवरूपापि सा शिवा सर्वानपि लोकान्परमशिवाराधनादीन्प्रापयितुं परमशिवमाराधयंती भूयः प्राप्तेवाभूदित्यर्थः ।

अथ शंकरसंहितास्थ उत्तरभागो व्याख्यायते

एतदष्टोत्तरशतं नाम्नामाम्नायसंमितम् ॥

आम्नायैः वेदैः संमितं सम्यग्बोधितं वेदैकसंवेद्यार्थप्रतिपादकमित्यर्थः ।

मूलम् ।

यथादिच्छसि देवेशि तदनेनैव यास्यसि ॥

प्राप्स्यसीत्यर्थः ।

श्रीसूतः ।

शंकरस्य प्रिया गौरी जप्त्वा कालत्रयं सदा ॥

जप्त्वेति । आगमशास्त्रस्यानित्यत्वादिडभावः । कालत्रयं सदेत्यत्र सदाशब्दः प्रत्यहपरः । प्रत्यहं प्रातर्मध्यान्हसायं कालत्रयेऽपि जपित्वेत्यर्थः ।

मूलम् ।

नारायणोपदेशेन समाधिं परमं गता ॥
समवाप्य शरीरार्धं प्रसादाच्छूलपाणिनः ॥
ततः प्रभृति लोकेऽस्मिन्नर्धनारीश्वरः शिवः ॥
यस्त्रिसंध्य पठेच्छंभोर्नाम्नामष्टोत्तरं शतम् ॥
सर्वान्कामानवाप्नोति भुक्तिं मुक्तिं च विंदति ॥
शतरुद्रियत्रिरावृत्त्या यत्फलं प्राप्यते नरैः ॥
तत्फलं प्राप्नुयादेवमेकावृत्त्या पठेन्नरः ॥

शतं रुद्राः प्रतिपाद्यत्वेनास्मिन्निति शतरुद्रः ' नमस्ते रुद्रमन्यव ' इत्यनुवाकसमूहः । यद्यप्यत्र हिरण्यबाहुप्रमुखाः शताधिका एव प्रतिपाद्यते ब्रह्मांडोत्तरभागे ' षोडशावरणं चक्रं किं त द्रुद्राधिदैवतम् ' इत्यध्याये श्रूयते तथापि शताधिकयोजनवत्यपि सागरे ' शतयोजनविस्तीर्णः सागरः समलंकृतः ' इतिवच्छतरुद्रः द्वितीयशताभावमात्रतात्पर्यको द्रष्टव्यः । 'शतरुद्रास्त्रियश्च' इति तद्धितः । ' नवा एकेनाक्षरेण छंदांसि वियंति ' इति श्रुतेः । एकाक्षराधिक्येऽपि न छंदोभंग इति छंदोभाष्यवार्तिकराजयोः स्पष्टम् ॥ मूल ' धन्यः स एव लोकेऽस्मिन्यस्य भक्तिः शिवे भवेत् ॥ सकृद्वा पूजयेल्लिंगं यस्तु भक्तिसमन्वितः ॥ कुलकोटिं समाराध्य सदा सात्र ब्रह्म विंदति शाश्वतम् ॥ बिल्वपत्रैः प्रशस्तैर्वा पुष्पैश्च तुलसीदलैः । तिलाक्षतैर्यजेद्देव समुद्धृत्य स याति परमां गतिम् ॥

जीवन्मुक्तो न संशयः ॥ नाम्नामेषां पशुपतेरेकमेवापवर्गदम् ॥ अन्येषां चैव शिष्टानां फलं वक्तुं क ईशते ॥ एकैकमपि चेन्नाम चापवर्गप्रदायकम् ॥ भवेत्किमेतैः सर्वैरपि नामभिः परमशिवमन्वह-माराधयतः पुरुषधौरेयस्य फलं के वा वक्तुमीशते समर्था भवंति न केऽपीत्यर्थ इति । इत्येवं परम-शिवाष्टोत्तरशतदिव्यामृतनाम्नामाम्नायैकमनागम्यानामनवरतमसंडायमानाभिनवानंदरसनिर्भरानुभा-विकाननेकभंगिभेदभिन्नाभिप्रायविषयीभूतानप्यर्थाननुसंधाय पुनस्तदपर्यवसितांतराल्हादवदनेका परिमितानंदलीलाविग्रहस्यानादितेजःपुंजात्मकानंतरूपधारिणः परज्योतिषः परमशिवस्यापारवै-भवोल्लसदमृतार्णवतरंगायमाननामरुचिबलपराक्रमातिशयविशेषानशेषेण परिज्ञातुमीशाः ये दधी-चिप्रभृतयो महर्षयस्त एव धन्याः प्रकृतार्थाः परमशिवभावैक्यभाजनानि चेत्यन्यापदेशस्तुति-व्याजेनाचिंत्यापरिमितशक्तिप्रतापमावेदयन्पुनः परमशिवमेव प्रस्तौति

जानाति सांब तव धामरुचिं दधीचिर्जानाति ते पदनखाग्रबलं दशास्यः ॥
जानाति दौर्बलपराक्रममेष मेरुर्जानंत्यमोघपटुबाणगतिं पुराणि ॥ ११९ ॥

जानातीति अत्रायमभिसंधिः पुरा हि ब्रह्मणःसुतादुत्पन्नः क्षुपाख्यो विष्णुपरायणः कश्चित्क्षत्रियः दधीचिरिति कश्चिद्ब्रह्मर्षिः परमशिवभक्ताग्रगण्यस्तयोश्च परस्परं क्षत्रियो वरिष्ठो ब्राह्मणो वेति चिरं विवादे संवृत्ते विष्णुपरायणः सर्वोत्कृष्टबलपराक्रमातिशयवानहमेको वरिष्ठो नान्य इत्यभिमन्यमानं क्षुपाख्यं राजानं क्रोधारक्तालोचनो ब्रह्मर्षिस्तद्वाक्यमसहमानो वाममुष्टिना समताडयत् । सोऽपि कुलिशेन विप्रर्षिं पुनरपि अताडयदेवं परस्परप्रहारयोस्तयोरंतःखिन्नमनाः ब्राह्मणः क्षत्रियेण परा-जितः सन्परमशिवाराधनैकबललब्धाकवरावध्यकायः सन्क्षुपाख्यं राजानं वामपादेनाताडयत् । सोऽपि चिरकालं विष्णुमाराध्य तल्लब्धवरोऽपि महर्षिविषयावगुंठितसामर्थ्यवानेवासीदिति स्वय-मेव साक्षादनादिपुरुषो विष्णुरात्मीयचक्रायुधप्रमृतीन्यमोघास्त्राण्यमोचयत् । तान्यपि दधी-चिप्रयुक्तपरमशिवनामांकितैः कुशमयैः शरैः स्तब्धवीर्याण्यकिंचित्कराण्येवाभवन्नित्यालोच्य पर-मशिवनामभजनबलप्रभावलक्ष्यमिदं सामर्थ्यमनन्यलभ्यमेवेत्याशंक्य परमशिवभजनैकपरायणदधी-च्यास्यं ब्रह्मर्षिमेव पुनरपि अनुससारेत्यादिकमशेषेण प्रपंचितं लैंगे ' ब्रह्मपुत्रो महातेजा राजा क्षुप इति स्मृतः ॥ अभून्मित्रं दधीचस्य मुनींद्रस्य सुरेश्वरः ॥ चिरंतनः प्रसंगाद्वै वादः क्षुपदधी-चयोः ॥ अभवत्क्षत्रियःश्रेष्ठो विप्र एवेति सुव्रतः॥ अष्टानामपि लोकानां वपुर्धारयते नृपः इत्यादिना ' जगाम भगवान्विष्णुः प्रणिपत्य महामुनिम् ॥ क्षुपो दुःखातुरो भूत्वा संपूज्य च मुनीश्वरम् ॥ दधीचिमभिवाद्याशु प्रार्थयामास विह्वलम् ॥' इत्यंतेन तथा । 'दशास्यो नाम रावणः समरनिर्जि-ताखिलसुरासुरोघबलमपि कदाचित्कैलासाचलं गच्छंस्तब्धगतिकं पुष्पकमवलोक्य किमेतदित्या-श्चर्यं कथमकांडनिष्प्रभमिदं पुष्पकमित्यंतश्चिंतयानस्तदवसरप्राप्तनंदिकेश्वरमुखोन्नतं ' निवर्तस्व दशग्रीव शैले क्रीडति शंकर ' इत्यादिवाक्यमाकर्ण्यत्यमर्षताम्रनयनः पुष्पकादवरुह्य कोऽयं शंकर इत्याभांटयन्भुजाभ्यां कैलासमीषदुत्तोलयामास । ततश्च भगवान्परमशिवस्तत्कृतं दौष्ट्यमवलोक्य प्रहसन्पादांगुष्ठमूलेन पर्वतात्तस्तं संपीड्य पुनश्चिरकालं सामभिर्विविधैः स्तोत्रैः स्तुतः सन्पुनर्मोचयामा-

सेत्यादिकं प्रतिपादितं रामायणे उत्तरकाण्डे 'अथापश्यद्दशग्रीवो रौक्ममावरणं तदा ॥ गभस्तिजाल-
संवीतं द्वितीयमिव भास्करम् । ' इत्यादिना ' संवत्सरसहस्रं तु स्तुवतो रक्षसो गतम् ॥ ततः प्रीतो
महादेवः शैलाग्रे विष्ठितस्तदा ॥ मुक्त्वा तस्य भुजान्राजा प्राह वाक्यं दशाननम् ' इत्यतेन । एवं
विद्युन्मालितारकाक्षकमलाक्षासुराधिष्ठितानि, कांचनरौप्यायसानि ब्रह्मदत्तवरलब्धानि यानि पुराणि
तानि च त्रिपुरविजयावसरोन्मुक्तबाणानुसंधानमात्रेणैवैकीभूय विश्लिष्टानीत्येतत्प्रसिद्धं लैंगे । यथा-
,ततस्ते सहिता दैत्याः प्रणिपत्य जगद्गुरुम् ॥ वरं पुराणि त्रीण्येव समास्थाय महीमिमाम् ॥ चरिष्यामो
हि लोकेशप्रसादाच्च जगद्गुरोः ॥ तथा वर्षसहस्रेषु समेष्यामः परस्परम् ॥ एकीभावं गमिष्यंति पुराण्ये-
तानि सानुग ॥ यदा समानि चैतानि यो हन्याद्भगवांस्तदा ॥ एकेनैवेषुणा देव स नो मृत्युर्भविष्यति ॥
एवमस्त्विति तान्देवः प्रोच्य प्राविशद्दिवम् ' इत्यादिस्मृतिप्रसिद्धफलकपराशिवस्तुत्यंतरापेक्षया
प्रकृतस्तोत्रस्य फलविशेषं निर्दिशन्पुनर्निर्देशमुखेनेतरापेक्षया उत्कृष्टत्वं दर्शयति

इयं शंभोरष्टोत्तरशतकनामार्थविवृतिर्द्विजातीयैरष्टोत्तरशतकवृत्तैर्विरचिता ॥
फलं नामस्वर्थावगतिषु च भूम्नैव विदितं बहूनां वृत्तानां प्रमितिरधिका यत्र फलति ॥ ११६ ॥

इयं शंभोरिति । शिवादिपरमेश्वरान्तानि अष्टोत्तरशतसंख्याकानि यानि नामानि तेषां येऽर्थाः नैर्मल्या
दिपारमैश्वर्यान्तास्तेषां विवृतिर्निरुक्तिर्विजातीयैः परस्परभिन्नैरष्टोत्तरशतसंख्याकैर्वृत्तैर्विरचितेत्यन्वयः ।
फलमिति । तच्चनाम्नां तत्प्रतिपाद्यार्थविशेषावगतीनां च तत्तच्छ्रुतिस्मृत्यागमादिषु भूरिशः प्रतिपादि-
तमित्यर्थः । तथा श्रुतिः—' अपि वा यश्चांडालः शिव इति वाचं वदेत्तेन सह स वसेत्तेन सह संवदेत्तेन
सह भुंजते ' इति । ' महापातकविच्छित्त्यै शिव इत्यक्षरद्वयम् ॥ अलं नमस्क्रियायुक्तो मुक्तये कल्पितो
मनुः ' इत्येवमाद्याः स्मृतयः प्रागुपदर्शिता अन्याश्चागमपुराणस्मृतिषु पौरपरार्धमवगंतव्याः । बहूना-
मिति । शिखरिण्यादिहरिणप्लुतान्ताष्टोत्तरशतसंख्याकवृत्तानां प्रमितिः परमत्राधिकेत्यर्थः । तथाचो-
तरसाधारणासिद्धफलापेक्षयात्रवृत्तविशेषाविज्ञानस्यैवाधिकफलत्वोक्त्या परमशिवभजनैकतत्पराणां स्व-
भावत एव तत्तत्स्तोत्रादौ प्रवृत्तिसंभवेऽप्यस्यां स्तुतौ लौकिकालौकिकसाधारणाखिलविद्वल्लोकप्रवृ-
त्तिविषयत्वव्यंजनेन सर्वोत्कृष्टत्वमेतत्स्तोत्रस्येत्यर्थः ॥ ११६ ॥

एवं स्तोत्रोत्कर्षमुक्त्वा तत्कर्तृनामोक्तिपूर्वकं 'नाम्नामष्टशतं निरुच्य जनुषः साफल्यमीहे तमा-
मृः' इति प्रागुपक्रांतमुपसंहरति

इति काशिनिवासिसाग्निचित्यक्रतुकृद्भास्कररायभारती ॥
जनुषः सफलत्वसिद्धये शिवनामाष्टशतं व्यवर्वरीत् ॥ ११७ ॥

अग्निचित्येन सहितं क्रतुं करोतीति साग्निचित्यक्रतुकृत्काशिनिवासी चासौ स चेति तथा
भारत्यंतमेकं पदं वा भारतीति कर्तृरूपनाम भास्कररायस्य भारती वाणीति वार्थः । सैव ग्रंथकर्त्रीति
यावत् । व्यवर्वरीद्वृणोतेर्व्युपसृष्टाद्यङ्लुकि लुङि रूपम् ॥ अत्र वृत्ते प्रथमचरण औपछंदसिकस्यो-
त्तरत्रयो वैतालीयस्य अतएव काशीतिपदस्य ह्रस्वांतः पाठः छंदोनुरोधात्कविसमयानिर्देशः ।

'मधुस्रवगुडूचिपाठान्वितम्' इतिवाग्भट्टेन च सप्तमिश्यलवोपहेतेति भोजराजेन इतिपद्मेन कोकिलानितिकालिदासेनान्यैश्च बहुशः प्रयुक्तत्वात् । 'छंदोव्याकरणयोर्विरोधे छंदो बलीय' इत्यर्थस्य 'इत्यादिपूरण' इतिसूत्रे वार्तिकराजभ प्यराजयोः समर्थनात् । 'ङ्यापोः संज्ञाछंदसोर्बहुलम्' इति सूत्रात् 'बाहुलको ह्रस्व' इत्यप्याहुरिति सर्वं शिवम् ॥ ११७ ॥

श्रीमच्छंकरसंहिताशिवरहस्यादिप्रसिद्धात्मना नाम्नामष्टशतस्य षोडशशतश्लोक्या निरुक्तिं व्यधात् ॥ श्रीभारत्युपनामभास्करकृती ता विस्तराद्दुस्तरां व्याचख्यौ पटु व्यंकटाचलपतिः काशीपतिप्रीतये ॥१॥ शिवनामकल्पवल्ल्या भास्करकविरालवालमाबाभूत् ॥ तद्व्यें' टाचलसुधीः सुधाभिरापूरयामास' इतिश्रीवेंकटाचलसूरिप्रणीतः शिवकल्पलतालवालसुधापूरः समाप्तोऽभूत् ॥